THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No 23.

---

The

# NAVARĀTRAPRADĪPA.

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

---

1928

2-0-0.

# नवरात्रप्रदीपः

धर्माधिकारिनन्दपण्डिताऽपराऽभिधान-
विनायकपण्डितप्रणीतः ।

THE

# NAVARĀTRAPRADĪPA

by

Nanda aliās Vināyaka Pandita Dharmādhikārī.

Edited with Introduction etc.
by
Vaidya Nātha S'āstrī Varakale,
Dharma S'āstra S'āstrī, Sādholal Research Scholar,
Government Sanskrit College, Benares.

With a Foreword by
PANDIT GOPINATH KAVIRAJ, M. A.,
Principal, Govt. Sanskrit College,
Benares.

Government Sanskrit Library,
Sarasvatī Bhavana, Benares.
1928.

# सूचीपत्रम् ।





# FOREWORD

The following pages represent the text of a work on Dharmaśāstra by the great Nanda *alias* Vināyaka Pandit of the Dharmādhikārī family of Benares. The work deals with certain details* connected with the observance of the Navarātra rites. These details have been well brought out in the Sanskrit Introduction prefixed to the work & need not be repeated here.

The author lived in Benares in the 17th Century of the Christian era & was universally respected as the leading pandit of the age in Northern India, specially on questions connected with Hindu Law. He was the author of several works, mostly on Dharma S'āstra, the only exception being his Mādhavānanda Mahākāvya. His ancestor Pandit Lakṣmīdhara, a Māhārāṣṭra Brāhmaṇa of the Mudgala family, was one of the most celebrated scholars of Bidar in Southern India & was recipient of high honours from the Emperor of Delhi. He was recognised in those days as the highest & final authority on Hindu Law. His younger son Govinda migrated to Benares, on the death of his elder son S'rī Kṛṣṇa, together with the latter's in-

* These details bear upon the determination of the *tithis*. So far as the *Pratipat* is concerned the author is in favour, when it is not available in its purity, of it being connected with *Amā* rather than with Dvitīyā. The Navarātra Vrata is held by him to be a species of "Nakta Vrata." Regarding the Pāraṇā day the author prefers the Navamī against the Das'amī as in the opinion of Kamalākara Bhaṭṭa, Raghunandana & others. The Navamī view is supported by Ananta Deva ( Smṛtikaustabha ) & others.

fant son Mahīpati. The author of the present work is the great grand-son of this Mahīpati.

The family of Nanda Pandit had been a votary of S'rī Rāma. But since he obtained three images of Mahā Viṣṇu at Prayāga ( Triveṇī ) the family has been a worshipper of S'rī Kṛṣṇa. The Janmāṣṭamī ceremony of S'rī Kṛṣṇa, which was commenced by Nanda Pandit, is still continued in the family.

The author flourished at a time when Benares was the home of Sanskrit Learning. During his life time (1550—1630A.D.)Benares was the seat of literary activities of some of the greatest figures in the history of Sanskrit Literature. Nārāyaṇa Bhaṭṭa & his son S'aṅkara Bhaṭṭa I, Vidyānivāsa Bhaṭṭāchārya—the father of Viśvanātha Nyāyasiddhāntapañchānana, Nṛsiṃhāśrama, the author of Bhedadhikkāra, Advaitadīpikā and Vedāntatattvaviveka, Madhusūdana Sarasvatī, Nīlakaṇṭha Daivajña, the author of Nīlakaṇṭhī Tājika, Muhūrtachintāmaṇi & the court astronomer of the Emperor Akbar, were some of the most illustrious contemporaries of Nanda Pandit.

Nanda Pandit lived in the end of the 16th and in the beginning of the 17th century, the date of his commentary on Viṣṇu Smṛti being 1622 A.D. A manuscript of the Dharmādhikārī Vaṃśacharita, written by one Veṇīrāma Pandit, is available. It is a descriptive account of the family beginning with Pandit Lakṣmīdhara of Bidar, the 5th ancestor of Nanda Pandit Dharmādhikārī. From this it appears that the family has been famous from the days of Lakṣmīdhara for proficiency in Dharmaśā-

stra learning and that it has been a Vaiṣṇava family with Rāmachandra as its family deity. A list of Nanda Pandit's works has been supplied in the Sanskrit Introduction, to which may be added the name of Māṃsamīmāṇsā,* a work mentioned in his own S'rāddhakalpalatā.

Govt. Sanskrit College,
Benares. GOPINATH KAVIRAJ.

---

* This work should be distinguished from works on the same subject by Viśvanātha Nyāyapañchānana and others.

श्रीः

# उपक्रमः ।

"कालाय तस्मै नमः"

अहो नितान्तं किल योगिनामपि सुदुरधिगमः कालस्य महिमा । अस्य किल कलाविलासानां पुरो ब्रह्मविष्णुमहेशानां सृष्टिस्थितिप्रलयविधातॄणां देवदेवानामपि कलालेशोऽपि न प्रभवति, का कथा किल वराकाणां मानवानां निसर्गपरवशानां दुरालस्यदुरहङ्काराऽभिनिविष्टचेतसाम् । अस्य खलु कलाजालान्तर्गतः पुरुषः कां कां वा दशां नाऽधिरोहति । अयं हि कदाचित् नृपं याचकयति, याचकं नृपयति । एकं सम्मानयत्यपरमपमानयति । अहो कालकलानां वैचित्र्यम् । अस्याऽनन्तोदरे किं न जातं किं वा न निलीनम् । अत्र हि जातुचित् कल्पनातीतमपि वस्तु पुरो दृश्यते कल्पितमपि गगनकुसुमायते । उपकारोऽपकारायते । अपकारश्चोपकारतां व्रजति । अमृतं विषायते विषमप्यमृतायते । एकतो जन्म परतो निधनम् । य एव सुखी स एवाऽन्यदा दुःखी दृश्यते । निन्दन्तु वा स्तुवन्तु वा जनाः कालस्य कार्यं निरन्तरनिरन्तरायमेवमेव प्रचलति । अहो घटनापाटवं कालस्य । सत्यं समुपश्लोकितं भर्तृहरिणा—

यत्राऽनेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको

यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः ॥

इत्थं चेमौ रजनिदिवसौ दोलयन्वाऽपि चाक्षौ
काळः काल्या सह बहुकलः क्रीडति प्राणिशारैः ॥

हा हन्त तथाऽपि न जहति मोहानिद्रामुद्रितलोचना निजसर्वस्वनाशकारिणीं दुर्बुद्धिम्। न च निजधर्माचरणे चित्तमर्पयन्ति। भवतु इदमपि कालस्यैव माहात्म्यम्। अयि जनाः! धर्माचरणमन्तरा सुखसम्भावनाऽपि वर्त्तते किमु? जागर्त्ति च प्राणिमात्रस्य हृदये 'निरन्तरं निरतिशयं सुखमेव मामायातु न दुःखलेशोऽपि जात्वपि' इति लालसा। ततश्च सुखप्राप्त्यै आजीवनवियोगं प्रवर्तते। परं पारमार्थिकं सुखमजानानो जीवजाहं प्रयतमानोऽपि तत्सुखं नैव लभते पुरुषः। कुतो वा लभताम्; यतो हि धर्ममन्तरेण सुखोपलब्ध्युपाय एव नास्ति। अतो धर्म एव परमपुरुषार्थ इति वास्तवम्। अत एव

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।

इति श्रूयते। धर्मस्य वास्तवं स्वरूपं धर्मोऽपि वेत्तुं प्रभवति न वेति को जानाति, तथाऽपि यथामनीषं विचार्यमिति प्रसङ्गापतितं विचार्यते। धर्मो हि द्विविधः साधनसाध्यभेदात्। तत्र त्रिवर्गरूप आद्यः साधनरूपः। आत्मदर्शनाकारोऽपरः साध्यस्वरूपः। स एव परं पदम्, स एव महाकालः, स एव परमो धर्मः, किं बहुना स एव सर्वस्वम्। तत्प्राप्तिरेव सर्वासां श्रुतिस्मृत्यादीनां सारम्। सैव चरमा सीमा। अत एवाहाऽऽपस्तम्बः—"आत्मलाभान्न परं विद्यते" अत एव याज्ञ-

वल्क्योऽपि--

इज्याऽऽचारदमाहिंसा दानं स्वाध्यायकर्म च ।

अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥

आत्मदर्शनमात्मलाभः । इत्यात्मलाभस्य परमधर्मत्वं प्रत्यपीपदत् । तत्र यथाऽधिकारं च व्यवस्था । एवं च क्रियाया धर्मत्वं वदतां क्रियाजन्याऽपूर्वस्य च धर्मत्वं वदतां परस्परं न कोऽपि विरोधः । निरुक्तदिशा व्यवस्थोपपत्तेः । अत एव 'इज्याचारदमाहिंसा' इति याज्ञवल्क्युक्तं सङ्गच्छते । किं च "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुत्यादिप्रतिपादितस्य मुख्यधर्मस्यात्मदर्शनस्य सम्पादने शोभनाचारं पुरुषमन्तरा नाऽन्योऽधिकारी सम्भवति । आचारश्च क्रिया तेन क्रियायाः परमधर्मत्वं मन्यमानानामुक्तिः साधीयस्येव । अत एव परमाप्तेन भगवता मनुना

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त्त एव च ।

तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः ॥

इत्याचारस्यैव परमधर्मत्वं प्रतिपादितम् । एवं हि धर्मार्थकाममोक्षाणां चतुर्णां व्यवस्था । उभयविधस्याऽपि धर्मस्य, पुरुषार्थचतुष्टयस्येति यावत् जिज्ञासायां श्रुत्यादिषु प्रमाणेषु परं प्रमाणं श्रुतिः ।

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥

इति मनुवचनात् । एवं च सुखं धर्माचरणमन्तरा न सम्भवतीति सिद्धम् । धर्माचरणं च कालज्ञानं विना न सम्भवति ।

तथा हि "वसन्ते ब्राह्मणोऽग्नीनादधीत" "वसन्ते ब्राह्मणमुपनयीत" "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" "श्राद्धं कुर्वन्नमावास्यां" इत्यादिश्रुतिस्मृतिषु तत्तत्कालविशेषे तत्तत्कर्म विहितम् । तच्च ऋते कालज्ञानं कथमुपपद्येत ? अतो धर्माचरणे कालज्ञानं नितरामपेक्षितम् । अत एव लगधाचार्यैरुक्तम्—

वेदा हि यज्ञार्थमभिप्रवृत्ताः
कालाऽनुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं
यो ज्योतिषं वेद स वेद यज्ञान् ॥ इति ।

किं च लोकेऽपि यथा वर्षाकाले बीजमुप्तं सत् फलति न ग्रीष्मे इति प्रत्यक्षतयाऽनुभूयते, तस्मात् तत्तद्योग्यकाल एव कृतं कर्म फलोत्पादकं भवति नान्यथा । एवं श्रुत्याद्युक्तकर्माण्यपि काले कृतान्येव स्वेष्टफलोत्पादने शक्तानि भवन्ति । एवं च धर्माचरणे कालनिर्णयस्याऽत्यन्तमावश्यकतेति सिद्धम् ।

अथ को नाम कालोऽयमिति विचारावसरे कालपदस्य

कालो मृत्यौ महाकाले समये यमकृष्णयोः ।

इति निघण्टूक्तेः, महाकालाद्यर्थाः पुरः समायान्ति । तत्रेदं विचार्यम्, यदेतेऽर्थाः कथमुद्भूता इति । सूक्ष्मतत्त्वदर्शिनामिदमपरोक्षं यदेतत् मेयमातृमानलक्षणं सर्वं परमार्थत एकमपि बहुधाऽवभासते तदेव ब्रह्ममहाकालपरमशिवपरमात्मादिशब्दैर्व्यवह्रियते । तथा हि तद्ब्रह्म द्विविधं परं चापरं च । "द्वे ब्रह्मणी वेदितव्ये परं चापरं च" इति श्रुतेः । तत्र परं निष्कलम् । अपरं

सकलम् । एतदेव सर्वशक्तिमत् जगन्नियामकं जगदात्मकं च

"जगन्नियन्ता जगदात्मकश्च"

"एको हि रुद्रो न द्वितीयाय तस्थु-

र्य इमांल्लोकानीशत ईशनीभिः"।

इत्यादिश्रुतिप्रतिपादितम् । तत्र सर्वासां शक्तीनां प्रवरा शक्तिर्महाकालीत्युच्यते । तत्सम्बन्धेन ब्रह्मणोऽपि महाकालत्वम् । यत इयमेव निखिलं तत्त्वजातं कलयति । तत्र तत्त्वजाते भावानां क्रमाऽवभासकं कालाऽभिधं तत्त्वमस्ति । तस्याऽपि कलनादस्या महाकालीत्वम् । मृत्युना हि भावाभाससमाप्तिर्भवति, नाम भावस्य काले प्रलीनत्वं भवति ततः कालपदं मृत्योरपि बोधकं भवति । इत्यादि तत्तत्कारणैस्तत्तद्बोधकं कालपदं भवति । कालेनैव हि 'जायते' 'अस्ति' इत्यादिव्यवहाराः समुद्भूताः । तदुक्तं वाक्यपदीये—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।

अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्त्तते ॥

अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः ।

जन्मादयो विकाराः षट् भावभेदस्य योनयः ॥

एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।

भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥ इति ।

तदिदं कालनिरूपणमतिगहनमन्यदा यथाऽवकाशं विचारयिष्यते । सोऽयं कालः सर्वत्र सर्वैरपि दार्शनिकैरङ्गीकृत एव । तथाहि तत्र तत्र व्यवहारास्ते च सङ्क्षेपतः प्रदर्श्यन्ते । तथाहि श्रुतौ

"कृतं यत्स्वघ्नी विचिनोति काले" इति बह्वृचाः "अहमेव कालो नाहं कालस्य" इति तैत्तिरीयकाः "का च सन्ध्या कश्च सन्ध्यायाः कालः" इति सामगाः इत्यादि । स्मृतौ यथा सृष्टिप्रकरणे मनुः—'कालं कालविभक्तीश्च' इति । याज्ञवल्क्यः—'श्राद्धकालाः प्रकीर्तिताः' आपस्तम्बः—"अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत्" (आप०ध०सू०१-१-१-३३) गौतमः—"संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो-द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालाः" (गौ०ध०सू०१९-१८) इति । बौधायनः—

"शरीरं बलमायुश्च वयः कालं च कर्म च ।
समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत्" (बौ०ध०सू० १-१-१६) इति । एवमन्यान्यपि स्मृतिषूदाहार्याणि । महाभारते—

प्रहरौ घटिकान्यूनौ प्रहरौ घटिकाऽधिकौ ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥

अन्यत्र पुराणेऽपि—

अनादिरेष भगवान् कालोऽनन्तोऽजरः परः ।
सर्वगत्वात्स्वतन्त्रत्वात्सर्वात्मत्वान्महेश्वरः ॥

वैशेषिके "अपरस्मिन्नपरं चिरं क्षिप्रमिति काललिङ्गानि" (वै०सू०२-२-६) येऽपि साङ्ख्यादयः कालरूपं तत्त्वान्तरं न मन्यन्ते तेऽपि आर्थिकं कालतत्त्वमूरीकुर्वन्त्येव । पृथगनुक्तिस्तु तत्तच्छास्त्रीयप्रधानतमप्रमेयेषु प्रकृतिपुरुषविवेकादिष्व-

नुपयोगित्वेन । तथाहि साङ्ख्यशास्त्राचार्येण पञ्चविंशतित- त्त्वविवेचनाऽवसरे

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः (सां०का०)
इत्यत्र कालाऽभिधं तत्त्वान्तरमनुक्त्वैव

साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ (सां०का०)

इत्युक्तम् । तेन कालतत्त्वं साङ्ख्याचार्याणामप्यनुमतमेवेति सुदृढं वक्तुं पार्यते । कालपदार्थाऽविवेचनं त्वनुपयोगात् । तथाह्याहुः साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः–"कालस्तु वैशेषिकाऽभिमत एको नातीतानागतादिभेदं प्रवर्तयितुमर्हति । तस्मादयं यैरुपाधिभेदैरतीतानागतादिभेदभावं प्रतिपद्यते सन्तु त एवोपाधयो व्यवहारहेतवः कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्याः" इति । तथा योगशास्त्रेऽपि कालतत्त्वं पृथगनङ्गीकृत्याऽपि 'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" (यो०सू०१.–१४) "जातिदेशकालसमयाऽनवच्छिन्नाः सार्वभौमा महाव्रतम्" (यो०सू०२–३१) इत्यादौ तत् व्यवहृतम् । एवमेव तत्र तत्रोदाहार्यम् । किं बहुना आविद्वदङ्गनागोपालं प्रसिद्धस्य कालस्य कथमपह्नवः शक्यते कर्तुम् । साक्षात् परम्परया वा सर्वेऽप्यत एव शास्त्रज्ञाः कालमङ्गीकुर्वन्ति । भिन्नभिन्नरूपेण गृह्णन्तीत्यन्यदेतत् । सर्वेऽपि कालमङ्गीकुर्वन्तीति श्रुतावेव प्रतिपादितम् । तथा हि तैत्तिरीयका अरुणकेतुके मन्त्रमामनन्ति —

स्मृतिः प्रत्यक्षमैतिह्यमनुमानचतुष्टयम् ।
एतैरादित्यमण्डलं सर्वैरेव विधास्यते ॥

न च श्रुत्याऽनया स्मृत्यादिकमादित्यमण्डलसाधकमित्युक्तं न कालसाधकमिति वाच्यम् । मण्डलं हि सार्वजनीनप्रत्यक्षसिद्धम् । न तत्र स्मृत्याद्यपेक्षा । तस्मात् कालविवक्षयैव कालसाधकमण्डलसाधकत्वं स्मृत्यादीनां प्रतिपादितमिति वाच्यम् । कालविवक्षा च—

सूर्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि ।
तस्याः पाकविशेषेण स्मृतं कालविशेषणम् ॥

इत्यग्रेतनपठितमन्त्रेणाऽवसीयते । एवं च कालस्य सर्वत्र व्यवहारोऽस्तीति सिद्धम् । स किंस्वरूपः कुत्र कुत्र कथं कथं चोक्त इति सर्वं यथाऽवकाशमन्यत्र विचारयिष्यते । साम्प्रतं प्रकृताऽनुसरणं साम्प्रतम् ।

तदेवं धर्मशास्त्रे कालनिर्णयस्यात्यन्तिकीमावश्यकतां मनसि विभाव्य अधुनाऽवधि बहुभिर्महर्षिभिः परःसहस्रैर्विद्वद्भिः कालनिर्णयाः प्राणायिषत । तेषु बहवो निबन्धाः कालोदरदरीकोणेष्वेव निलीनाः । ये च समुपलभ्यन्ते तेष्वपि बहवो विदुषां महात्मनां गृहे वेष्टनाऽवगुण्ठिता गर्भागारकोणेषु विराजन्ते । मद्दृष्टेषु कालनिर्णयेषु नवरात्रमात्रविषयमवलम्ब्य मतान्तरखण्डनमण्डनपुरःसरं विहितेषु निबन्धेषु प्रस्तुतो निबन्धः धर्माधिकारिनन्दपण्डिताऽपराभिधानविनायकपण्डितविरचितो नवरात्रप्रदीपोऽतिसमीचीनः सर्वेषु निबन्धेषु । सोऽयमत्युपयु-

क्तोऽप्यद्यावधि न कुत्राऽपि मुद्रित इति संशोध्य सम्मुद्य प्रकाशितः सहर्षं सविनयं सादरं च तत्र भवतां भवतां नवरात्रनिर्णयजिज्ञासूनां प्राचीननिबन्धसमवलोकनकुतूहलानां मनीषिधुरीणानां करकमलेषूपहारीक्रियते । भवन्तोऽपि शास्त्रपरिपूतेन समीक्षणेन ग्रन्थमेनं समीक्ष्य परमानन्दं प्राप्स्यन्तीति दृढमहं विश्वस्य ग्रन्थपरिचयाय प्रयते ।

---

## ग्रन्थपरिचयः

ग्रन्थोऽयं काशीस्थमहाराष्ट्रभूसुरवरेण धर्माधिकारिकुलकमलदिवाकरेण पदवाक्यप्रमाणपारावारपारीणधुरीणेन महामहिमशालिना धर्मशास्त्रमर्मज्ञेन नानानिबन्धविधायिना रामपण्डितात्मजेन नन्दपण्डिताऽपराभिधानेन विनायकपण्डितेन प्रणीतो विजयतेतराम् । अथ कोऽयं विनायकपण्डितः कदा च समभूत् के के निबन्धा अनेन विहिता इति सर्वमग्रे स्फुटीकरिष्यते । अस्य ग्रन्थस्याऽन्वर्थकं 'नवरात्रप्रदीप' इति नाम । अयं च केवलं नवरात्रनिर्णयविषयमेवाऽवलम्ब्य विहितो निबन्धः । अत्र निरूपिता विषया विषयसूच्यां प्रदर्शिता एवेति पुनरत्र वर्णनं पिष्टपेषणप्रायं भविष्यतीत्युपेक्ष्यते । जिज्ञासुभिस्तत्रैव द्रष्टव्यम् ।

अस्मिन् किल लोकत्रयीमपि निजगुणगणमहिम्ना अतिवर्त्तमाने कर्मभूमौ भारते वर्षे अनादिनिधनधर्मानुयायिनामस्माकं नवरात्रनिर्णयस्य क्रियत्यपेक्षेति सर्वजनविदितमेव ।

अत एव आमहतां महद्भ्य ऋषिभ्यः इदानीन्तनविद्वद्धौरेयपर्यन्तं च सर्वैरपि कालनिर्णयकृद्भिः न्यूनाधिक्यभावेन नवरात्रनिर्णयाय प्रयतितम्। नवरात्राण्यपि रामनवरात्रदेवीनवरात्रादीनि नैकानि। तत्र देवीनवरात्रं हि भारतवासिनां सर्वेषामेव जनानां प्राय आवश्यकमेवेति मन्ये। अथ न केवलं भारतीयानामेव, अपि तु अखिलब्रह्माण्डगतानां जन्तुमात्राणामावश्यकम्। यतः शक्तिमन्तरा शिवस्य शिवत्वमपि न सिद्ध्यति। येऽप्याग्रहग्रहिला निजादृष्टवैभवात् शक्तिमेव नाङ्गीकुर्वन्ति वराकास्ते दयनीयतया समुपेक्ष्या एव। भारतवर्षे च इदानीं कलिकालकवलितेऽपि पराशक्तिकृपाप्रसादलवेनैव साम्प्रतमपि न शक्तिपूजनपराङ्मुखा भारतीयाः सनातनधर्मानुयायिन इति परं हर्षस्थानम्। तेषामेव कृते इदानीमपि देवीनवरात्रनिर्णयाय प्रयतन्ते विद्वांसः प्रयतिष्यन्ते च। भवतु प्रकृतमनुसरामि। बहुभिर्निर्णीतोऽयं नवरात्रविषयो बहुधात्वमापद्यमानः मतभेदबाहुल्येन स्थिरां सिद्धान्तभूमिमनासादिवान् सुविदुषामपि चेतांसि व्याकुलयति। पश्यत विद्वांसः साम्प्रतमपि नवरात्रे केचिदमायुक्तप्रतिपदि देवीपूजनादि वाञ्छन्ति केचिच्च द्वितीयायुक्तायामिति महान्तं मतभेदम्। स्वमतस्थापनाय च बहूनि पुराणवाक्यानि मीमांसान्यायान् लौकिकीर्युक्तीश्च प्रदर्शयन्ति। अविद्याशक्तिविलासमन्तरा किमत्र कारणं स्यात्? भवतु साम्प्रतमिदमालोचनीयं यदत्र ग्रन्थे प्रतिपादिताः सिद्धान्ताः केषां सम्मता असम्मताश्च। किं च तेषां मतमिति। तत्र सत्स्वपि

बहुषु वादस्थलेषु मुख्यतया समालोच्यं वादस्थलद्वयम्। एकं प्रतिपन्निर्णयस्थलमपरं च पारणानिर्णयस्थलम्। काश्यां किल शङ्करभट्टादयो भट्टास्तदनुयायिनोऽन्ये च शुद्धप्रतिपदभावे अमाविद्धाद्वितीयाविद्धप्रतिपत्प्रसक्तौ द्वितीयाविद्धप्रतिपदो मुख्यतया ग्राह्यतां प्रतिष्ठापयन्ति। धर्माधिकारिनन्दपण्डितप्रभृतयस्तदनुयायिनश्च अमाविद्धप्रतिपदं मुख्यतया ग्राह्यां वदन्ति। एवं पारणानिर्णये भट्टा दशम्यां पारणं विधेयमिति प्रतिपादयन्ति स्वग्रन्थेषु। धर्माधिकारिणश्च नवम्यां विधेयमिति प्रतिपादयन्ति निजनिबन्धेषु। एतदेव मतद्वयं भट्टमतं धर्माधिकारिमतं चेति सङ्केतितं मया। तत्र भट्टमतेनैवं सङ्क्षिप्तः प्रतिपन्निर्णयः—"आश्विनशुक्ला प्रतिपत् देवीनवरात्रे शुद्धा ग्राह्येति मुख्यः कल्पः सर्वत्रादिसम्मतः। शुद्धाया अभावे अमाविद्धाद्वितीयाविद्धयोः प्रतिपदोः प्रसक्तौ द्वितीयाविद्धा मुख्या। तदभावे अमाविद्धा ग्राह्या, अन्यथा व्रतलोपः स्यादिति सिद्धान्तः। तथाहि अत्र व्रतविषये कर्मकालो बहुधा श्रूयते तत्र कानिचिद्वचनानि रात्रेः कर्मकालत्वं प्रतिपादयन्ति। अन्यानि च पूर्वाह्णस्य कर्मकालत्वं वदन्ति। न च पूर्वाह्णस्य कर्मकालत्वप्रतिपादकवचनानामनाकरत्वं शक्यते वक्तुम्। यथा पुराणान्तरीयाणां रात्रेः कर्मकालत्वप्रतिपादकवाक्यानामविगीतं प्रामाण्यमिष्यते तथैव देवीपुराणगतस्य पूर्वाह्णस्य कर्मकालत्वप्रतिपादकवचनस्याऽपि प्रामाण्यमेष्टव्यम्। यद्यपि तत्र तत्रोपात्तानां द्वितीयाविद्धानिषेधकानाममाविद्धानिषेधकानां च सर्वेषां

वचनानां तत्तत्पक्षेऽभिनिवेशं दधद्भिर्निबन्धनिबन्धृभिरुपन्यस्तानामनाकरत्वं वक्तुं शक्यते, तथाऽपि देवीपुराणगतस्य सर्वैराद्रियमाणस्य साक्षात्परिदृश्यमानवचनस्यानाकरत्वं शङ्कितुमपि न शक्यते। तद्वचनं यथा—

आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम्।
सुस्नातास्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम्॥ इति।

अत्र बहुवचनाऽनुपपत्तेः क्रमविधानाच्च प्राणभृदादिवल्लिङ्गसमवायेन प्रतिपच्छब्दः प्रतिपदादितिथिनवके गौणः। तथा रुद्रयामलेऽपि नवरात्रप्रक्रमे

प्रत्यहं पूजनं कुर्यात्त्रिकालं भक्तितत्परः।
अष्टम्यां जागरं चैव महापूजनपूर्वकम्॥

इति वचनेन प्रातर्मध्याह्नसायङ्कालानां कर्मकालत्वे सुतरां प्रतिपन्नं प्रातःकालस्य कर्मकालत्वम्। किं च डामरकल्पे यन्त्रोद्धारे कलशस्थापनपूर्वकं कलशोपरिस्थे यन्त्रे दुर्गा पूजा कार्येत्युक्तम्। तथाहि—

शृणु राजन! प्रवक्ष्यामि चण्डिकायन्त्रमुत्तमम्।
आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम्॥
सुस्नातस्तिलतैलेन पूर्वाह्णे च नृपोत्तम!।
पुण्याहवाचनं कृत्वा द्विजांश्चैव तु पूजयेत्॥
ततश्च कारयेद्वेदिं सप्तधान्ययुतां नृप!।
स्थापयेत्पूर्णकलशं पञ्चरत्नसमन्वितम्॥
वस्त्रे चारक्तके चैव संलिखेद्यन्त्रमुत्तमम्॥ इति।

अत्र सर्वत्र कालाकाङ्क्षायां 'पूर्वाह्णे' इति सम्बध्यते। एवं च पूर्वाह्णस्यैव पूजाकालत्वसिद्धिः। अतः पूर्वाह्णरूपकर्मकाल-व्यापिनी द्वितीयाविद्धैव प्रतिपन्नवरात्रप्रक्रमे ग्राह्येति सिद्धान्तः। रात्रेः कर्मकालत्वप्रतिपादकानि वचनानि तु गौणकालपरत्वेन नेयानि। ननु पूर्वाह्णस्यैव कुतो न गौणकालत्वं वाच्यम्। मैवम्। उत्तरकालस्यैव गौणतौचित्यात्।

स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः।

इति मण्डनोक्तेः।

न चैवमनेनैव सिद्धे रात्रेः कर्मकालत्वप्रतिपादकवचनानामानर्थक्यम्। सामान्यवाक्यस्य नित्यविषयत्वात्काम्ये नवरात्रव्रते विशेषतो गौणकालप्रतिपादनस्याऽर्थवत्त्वात्। यद्यपि "वर्षे वर्षे च कर्तव्यम्" इति वीप्सया "वसन्ते वसन्ते ज्योतिषा यजेत" इतिवन्नित्यताऽत्रेष्यते। तथाऽपि नानाफल-श्रवणस्याऽपि सत्त्वात् ज्योतिष्टोमवदेव नित्यकाम्यत्वात् का-म्यप्रयोगार्था गौणकालोक्तिः। इतरत्र सामान्यवचनादेव सिद्धेः' इति। यद्वा रात्रावपि पूजान्तरविधायकत्वेन रात्रि-कर्मकालवाक्यानि व्याख्येयानि। अत एव देवीपुराणे--

शुद्धेतिथौ प्रकर्त्तव्या प्रतिपच्चोर्ध्वगामिनी।
आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशाऽपि वा॥
अपराह्णे च कर्तव्यं शुद्धसन्तानकाङ्क्षिभिः।

इति हि यदा प्रतिपत्षष्टिदण्डाऽहोरात्रं व्याप्य वर्त्तते तदा आद्यषोडशद्वादशनाडीनां निषिद्धत्वात्तदैव चाऽपराह्णेऽपि कर्त-

व्यतोक्त्या पूर्वाह्णे षोडशघटिकासम्पाताभावे पूर्वाह्ण एव मुख्यः काल इति गम्यते । तथा च पूर्वाह्णस्य कर्मकालत्वेन तद्व्यापिन्या द्वितीयाविद्धाया एव ग्राह्यत्वे सिद्धे यदि कानि चित्प्रमाविद्धा-ग्राह्यताप्रतिपादकवचनानि समूलान्यपि भविष्यन्ति ततस्तानि द्वितीयाविद्धाया अभावे योजनीयानि ।" इति द्वैतनिर्णयकृच्छ-ङ्करभट्टाः । यच्चान्यत्र नवरात्रस्याऽस्य नक्तव्रतत्वं माधवाचा-र्यादिभिरुद्घोषितं तदप्येते वैकल्पिकत्वेन व्यवस्थाप्य तन्मतं च "सत्यमिदमेव रात्रिव्रतत्वेन" इत्यादिना "तेनाऽयं माधवग्रन्थः सर्वथाऽप्यलम्बकः केवलं भक्तिग्राह्य एवेत्युपेक्षणीयः" इत्यन्तेन ग्रन्थेन माधवाचार्यप्रतिपादितं देवीपूजायां प्रदोषकालस्य मुख्यतया कर्मकालत्वं खण्डयन्ति । अन्यदपि सर्वं विस्तरतो द्वैतनिर्णयतोऽवसेयम् । विस्तरभिया नाऽत्र लिख्यते । एवमेव कमलाकरभट्टादयोऽपि द्वितीयाविद्धामेव मुख्यतया ग्राह्यां प्रतिपदं मन्यन्ते । परं तु तद्वंश्या एव रघुनाथभट्टास्तु पुनः नैवं मन्यन्ते। ते हि कालतत्त्वविवेचनाऽभिधे स्वनिबन्धे "अत्र हि नवरात्रशब्दो रात्रिशब्दस्याहोरात्रपरस्य तिथिविषयपूर्ववाक्यैकवाक्यतया औत्सर्गिकपूर्णतिथेरेव प्रायो व्यवहारविषयत्वेन सम्प्रतिपत्त्या च तिथिलक्षकत्वात् सप्तम्यन्तः कालरूपगुणविधिः । द्वितीयान्तो-ऽपि क्वचिच्छ्रुतः "कालाध्वनोरत्यन्तसंयोगे" (पा०सू०२-३-५) इतिवचनात्तादृश एव, न तु नामधेयम् ।" इत्यादि "तस्मा-द्गुणविधिरेव नवरात्रशब्दो न नामधेयम् ।" "यद्यपि च देवी-पुराणे कालत्रये पूजनमुक्तम्—

त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः । इति ।

तथाऽपि प्रातर्मध्याह्नयोः सङ्कल्पपूजनं, अङ्गविस्तर-पूजनं तु प्रधानभूतं रात्रावेव द्रष्टव्यम् । एवं सति यत्प्रातरेव कलशस्थापनादिपूर्वकं देवीस्थापनं शिष्टानां "पूर्वाह्णे पूजयेच्छिवाम्" इत्याद्याधुनिकलिखितं वचनं च तत्सर्वं प्रथमकालपूजार्थमुपपन्नमेव । तिथिनिर्णयस्तु प्रामाणिकोक्तनक्तव्रतत्वबलेन प्रधानपूजनस्य प्रदोषकालत्वमङ्गीकृत्यैव कर्तव्य इति मम मतिः । यद्यपि च सर्वा रात्रिः पूजाकालत्वेन श्रुता, तथाऽपि प्रथमाऽतिक्रमकारणाभावात्समभिव्याहृतनक्तभोजनाऽनुरोधाच्च

प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।

इति वचनस्य च भोजनात्मकनक्तव्रत इवाऽत्राऽपि प्रवृत्तेश्च प्रदोष एव तत्कालः । तत्र यदा प्रतिपदः खण्डत्वं तदा षट्सु कर्मकालसम्बन्धेषु दिनद्वये कृत्स्नकर्मकालव्याप्तौ द्वितीयदिन एव व्याप्त्यैकदेशेन वा तत्सम्बन्धेन दिनद्वयेऽपि साम्येन वैषम्येण वा तदेकदेशस्पर्शे च सङ्कल्पप्रभृतित्रिकालपूजाकालव्याप्तिलाभात् । त्रिसन्ध्यव्यापित्वाच्चोत्तराग्राह्यत्वस्य नक्तन्यायेनाऽसन्दिग्धत्वात् पूर्वदिन एव कर्मकालसम्बन्धः, दिनद्वयेऽपि तदस्पर्श इत्यनयोः पक्षयोः कस्यचिद्विशेषस्य वक्तव्यात् ग्राह्यप्रतिपन्निर्णयः क्रियते । तत्र द्वितीयदिनेऽस्तमयात्पूर्वं समाप्त्या पूर्वदिन एव व्याप्त्यैकदेशेन वा कालयोगे पूर्वैव ग्राह्या 'कर्मणो यस्य यः कालः' इतिवचनात् ।

नक्तव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते ।

इत्यादिवचनात्, "प्रतिपदाऽप्यमावास्या" इतियुग्मवाक्याच्च। एवं च पूर्वदिनेऽपि सत्त्वे सुतरां पूर्वा। एतद्विषयाण्येव

अमायुक्तैव कर्तव्या प्रतिपच्चण्डिकार्चने।

इत्यादीन्याधुनिकनिबन्धलिखितवाक्यानि।"

"पूर्वदिने प्रदोषादूर्ध्वं प्रवृत्त्या द्वितीयदिने चाऽस्तमयपर्यन्तसत्त्वेन दिनद्वये प्रदोषास्पर्शेऽपि पूर्वैव ग्राह्या। गौणकालव्यापित्वात्।

स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः।

इति प्रदोषोत्तरकालस्य गौणत्वात्।

नक्तव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते।

इतिवचनाच्च।" "एवं प्रामाणिकनिबन्धकारोक्तनक्तव्रतत्वाऽनुरोधेन पूर्वेद्युरेव प्रदोषव्याप्तौ दिनेऽसत्त्वेऽपि, तत्र सत्त्वे सुतरां दर्शयुक्तायां एव प्रतिपदो नवरात्रव्रतग्राह्यत्वे न्याय्ये यदिदानीन्तनानां केषां चिद्दाक्षिणात्यानां नक्तव्रतत्वाऽपह्नवेन

अमायुक्ता न कर्त्तव्या प्रतिपत् पूजने मम।
मुहूर्त्तमात्रा कर्तव्या द्वितीयादिगुणान्विता॥

इत्यादि क्वाऽप्यदृष्टवचनपुरस्कारेण त्रिमुहूर्त्तदर्शयुक्तामहोरात्रव्यापिनीमपि प्रतिपदमुल्लङ्घ्य 'मुहूर्तमात्राऽपि द्वितीयायुक्तैव सा ग्राह्या' इति निर्णयकरणं तादृशमेव चाऽनुष्ठानप्रवर्त्तनं तत्साहसमात्रम्" इत्याद्युक्तिभिः किंचिन्माध्यस्थ्यमवलम्बमाना अपि धर्माधिकारिमतमेव पोषयन्ति। तदनुयायिनस्तद्दौहित्रास्तत्सदुपाख्यरामभट्टाः स्वकृते कृत्यरत्नावलीनिबन्धे तथैव प्रतिपाद-

यन्ति । तत्तत एवाऽवसेयम् । लोके चेदानीं धर्माधिकारिवं-श्यांस्तदनुयायिनो द्वित्रानन्यांश्च विहाय सर्वेऽपि द्वितीयाविद्धायामेव प्रतिपदि देवीपूजनादिकं समाचरन्तो दृश्यन्ते । रघुनन्दनभट्टाचार्यादयस्तु स्वनिबन्धेषु पूर्वाह्णस्यैव कर्मकालत्वं मन्यन्ते । स्मृतिकौस्तुभकारानन्तदेवास्तु बहुना विस्तरेण खण्डनमण्डनपूर्वकं प्रतिपन्निर्णयं विधायान्ते "यैरमाविद्धायां प्रतिपदि कुलपरम्परया देवीपूजनादिकमनुष्ठीयते तैरमाविद्धैव मुख्यतया ग्राह्या । यैश्च कुलपरम्परया द्वितीयाविद्धायां पूजादिकमनुष्ठीयते तैर्द्वितीयाविद्धैव ग्राह्या" इति वदन्ति । प्रकृतग्रन्थे अमाविद्धैव प्रतिपत् मुख्यतया गृहीताऽस्ति । तथाह्येतेषां मतम्--

नक्तव्रतमिदं पार्थ सर्वपापप्रणाशनम् ।
नवरात्राऽभिधं कर्म नक्तव्रतमिति श्रुतम् ॥

"नक्तव्रतमिदं यस्मात्"

सम्पूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः ।

इत्यादिवचनैः प्रधानभूतायाः पूजाया नक्तकाले विहितत्वात् नक्तव्रतमेवेदम् । ततस्तद्व्यापिन्येव प्रतिपद्ग्राह्येति युक्तमेव । किं च द्वितीयाविद्धाविधायकानां बहूनां वचनानां त्रिंशदधिकेषु हेमाद्रिमाधवीयादिप्रामाणिकनिबन्धेषु अपरिदृश्यमानतया अन्यरीत्याऽपि व्यवस्थायाः सम्भवेन च अमाविद्धैव प्रतिपद्ग्राह्येति सिद्ध्यति । यान्यपि

वर्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव ! ।

इत्यादीन्यमायुक्तप्रतिपन्निषेधेन द्वितीयायुक्तप्रतिपद्विधायकानि वाक्यानि तान्यपि प्रतिपदः अमायोगाऽभावे द्वितीयायोगमात्रसत्त्वे द्वितीयायुक्तप्रतिपदोऽनुपादेयत्वशङ्कानिरसनद्वारा गौणकालविधानपराणि "प्रधानकालप्रत्यासत्तेः क्रमनियामकत्वात्" इति न्यायात्,

स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः।

इतिवचनाच्च। ततश्चामायुक्तप्रतिपदभावे द्वितीयायुक्तायामपि प्रतिपदि तदारम्भ इति तेषामर्थः। यः पुनरमायोगनिषेधः स विधेयस्तुत्यर्थ इति न कोऽपि विरोधः।" इत्यादि सविस्तरं ग्रन्थ एवाऽवलोकनीयम्। एवं चाऽत्र मतद्वये कतरत्समीचीनं युक्तं चेति निर्णयकरणं विषमतममपि गुरुचरणकृपाप्रसादसमासादितया विशदया दृशा स्वाऽनुभवेन च समालोच्यमानं नोपहास्यं स्यादिति विभाव्य सङ्क्षिप्ततया समालोच्यते—

इदं तावत्सर्वैरपि निरन्तरमनुभूयते यदपेक्षितवस्तुप्राप्त्याऽऽनन्दप्राप्तिरिति। अपेक्षितवस्त्वपि किं स्यादित्यत्र ब्रूमः सर्वमिदं विश्वं किल गुणत्रयमयम्। तत्र क्वचिद्वस्तुनि त्रिषु गुणेषु सत्त्वाधिक्यं तदपेक्षया न्यूनं रजः, तदपेक्षया च तमः। एवं तत्र तत्र न्यूनाधिक्यभावेन गुणत्रयमयत्वम्। प्राधान्येन व्यपदेशा भवन्तीति न्यायेन च सात्त्विकराजसादिव्यपदेशः। ततश्च सात्त्विकः सात्त्विकप्राप्त्या मोदते, राजसो राजसेन, तामसस्तामसेन। युक्तं चैतत्। ययोरेव साम्यं सम्भ-

वति तयोरेव सम्मेलनं सुखकरमित्यत्र न कश्चन सन्देहलेशोऽपि। अत एव "ययोरेव समं वित्तं" इत्यादयो लौकिक्यो गाथा अपि याथातथ्येनाऽनुभूयन्ते। एवमेवोचितसमये तद्योग्योपचारैर्योग्यदेवतायाः पूजने योग्यमेव फलमपि भवतीति समीहितफलाऽभिलाषिणा योग्यायोग्यविचारपूर्वकमेव सर्वमाचरणीयम्। एवं सति प्रथमत इदमालोचनीयम्, शक्तिपूजने कः कालः समुचितः स्यादिति। तत्र चालोच्यमाने

"निशि भ्रमन्ति भूतानि शक्तयः शूलभृष्टयः।"

"रात्रिरूपा यतो देवी दिवारूपो महेश्वरः।"

इत्यादिवचनपर्यालोचनया अनिर्वचनीयया स्वाऽनुभूत्या च रात्रिरेव मुख्यः काल इति समायाति। नक्तव्रतत्वाच्चाऽस्य व्रतस्य देवीपूजाया मुख्यः कालः प्रदोषकाल एव। तद्व्यापिन्येव च प्रतिपदपि ग्राह्येति युक्तम्। किं च ये आग्रहग्रहिला निजकुशाङ्कुरशेमुषीवैभवबलेन केवलं शास्त्रीयवचनाऽनुपूर्वीमेव पश्यन्तो द्वितीयाविद्धामेव प्रतिपदं व्यवस्थापयन्ति, हन्त बहिर्मुखास्ते दूरत एव नमस्करणीयाः। यतः अमातत्त्वं न हि कदाचिदपि विचारितं तैः। यद्यपि तैस्तिथिविचारादौ तैस्तैर्वचनजातैस्तत्तत्तिथिविचारः शोभनं विहितः, परं यदि स एवाऽध्यात्मदृशाऽकरिष्यत तदा नैतादृश आग्रहस्तैः कृतः स्यात्। तथा हि अमानाम सा तिथिः यत्र सूर्याचन्द्रमसोः परः सन्निकर्षो भवति। "यः परो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी। यः परः सन्निकर्षः साऽमावास्या" इति गोभि-

लोक्तेः। सा चाऽमानाम्नी भगवती महामाया क्षयोदयरहिता नित्या तिथिसंज्ञका इति तत्र तत्र प्रतिपादितम्। यथा च पठ्यते—

अमा षोडशभागेन देवि! प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः।
तिथयस्ताः समाख्याताः षोडशैव वरानने!॥ इति।

तथा च रहस्यभूता सर्वत्र विद्यमानाऽपि बहिर्मुखानामगम्या ध्रुवा क्षयोदयवर्जिता षोडशी कलैवामानाम्नी महाकला तद्युक्तः कालो महाकालः। सा च महाकाली तदङ्गभूता एव पुनः पुनर्बहिर्निर्गच्छन्त्यः पुनः पुनश्चान्तर्निलीयमानाः पञ्चदश कलाः प्रतिपदादिनामव्यपदेश्याः तत्तद्दिवसव्यवहारोपयोगिन्यो भवन्ति। तत्र शुक्लपक्षे एकैका कला बहिर्निर्गत्य चन्द्रमण्डलं पूरयति ताश्च प्रतिपदादयः पूर्णिमान्ताः। कृष्णपक्षे च क्रमेणैकैका कला लीयते। ता अपि क्रमेण प्रतिपदादिनामभाजो भवन्ति। षोडशी कला तु "तस्य रात्रयः पञ्चदश कला ध्रुवैवाऽस्य षोडशी कला" इति श्रुतिप्रतिपादिता नित्यं सूर्ये एव वर्तते। अत एव तिथयः पञ्चदशैव व्यवह्रियन्ते। पौराणिकानां मते ताः पञ्चदश कलाः क्रमेण कृष्णपक्षे वह्न्यादयः प्रजापत्यन्ता देवाः पिबन्ति, शुक्लपक्षे चोद्गिरन्तीति क्रमेण तासां तिथीनां प्रतिपदादिनामानि भवन्ति। ज्योतिःशास्त्रे त्वन्यथैव प्रतिपादितं तद्ग्रन्थान्तरतोऽवसेयम्। तत्त्वतस्तु सर्वमप्येकमेव।

एवं सति यत्र हि महाकालमहाकाल्योः सामरस्यं जायते तादृशयोगयुक्तं कालममाविद्धप्रतिपदं विहाय द्वितीयाविद्धामेव प्रतिपदं देवीपूजनेऽङ्गीकुर्वन्ति ते कथं ज्ञापयितव्याः । भवतु । अत्राऽन्यदपि रहस्यतमं वर्त्तते परं तस्य गुरुमुखैकमंत्रेद्यत्वेनाऽतिगोपनीयत्वेन तल्लेखनमनुचितमिति नाऽत्र तल्लिख्यते । जिज्ञासुभिर्गुरुमुखतस्त्वाऽनुभूत्या चाऽवगन्तव्यमित्येवालम् ।

एवं च ये हि माधवाचार्यनन्दपण्डितरघुनाथभट्टादयः अमाविद्धप्रतिपदं मुख्यतया ग्राह्यां मन्यन्ते देवीनवरात्रे, तथैव तत्र प्रधानभूते देवीपूजने प्रदोषकालस्यैव मुख्यकर्मकालत्वं मन्यन्ते नवरात्रव्रतस्य च नक्तव्रतत्वं साधयन्ति तन्मते, ये च शङ्करभट्टकमलाकरभट्टनीलकण्ठभट्टभानुभट्टादयः द्वितीयाविद्धां प्रतिपदं मुख्यतया ग्राह्यां मन्यन्ते प्रधानभूते देवीपूजने च पूर्वाह्णस्यैव मुख्यकर्मकालत्वं मन्यन्ते नवरात्रव्रतस्य च नक्तव्रतत्वं न मन्यन्ते तन्मते च कियदन्तरमिति पण्डिता एव विचारयन्तु । ननु शङ्करभट्टकमलाकरभट्टसदृशानां विदुषां कथमत्रैतादृश आग्रह इति चेत् न किञ्चिदेतत् । यतो हि—

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥

इति स्थित्या तत्र नाश्चर्यलेशाऽवकाशः । इत्थं समालोचितं सङ्क्षेपेण प्रतिपन्निर्णयवादस्थलम् । अत्र बहुवक्तव्येऽपि विस्तरभियैतावतैव विरम्यते ।

अतः परं द्वितीयं महद्वादस्थलं पारणानिर्णयः समालोच-

नीयः । अत्राऽपि मतभेदः । तत्र 'दशम्यां पारणं कार्यं देवीनवरात्रे' इति भट्टप्रभृतीनां मतम् । 'नवम्यां पारणं कार्यं देवीनवरात्रे' इति धर्माधिकारिप्रभृतीनां मतम् । तत्र पूर्वं भट्टमतं सङ्क्षेपेण प्रदर्श्यते—

"पारणं दशम्यामेव कार्यम् । नवरात्रे उपवासनवकविधानात् । तथा हि वचनम्—

आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव ।
देविकापूजने प्रोक्ताः सर्वकामफलप्रदाः ॥ इति ।

अत्र तिथिनवकविधानात्पूजायां तावत्सङ्ख्यापूरकनवमीविधिः सिद्धः । ततश्च फलिसंस्कारकतया तदङ्गभूतेषूपवासादिषु नक्तादिवैकल्पिकतया तत्स्थानापन्नेष्वनुक्ताऽपि तावन्नवसङ्ख्या व्रीहिधर्म इव यवेषु प्राप्नोति किमुतोक्तेति । तथा—

एवं च विन्ध्यवासिन्यां नवरात्रोपवासितः ।

इत्यनेनाऽपि नवम्यामुपवासः सिद्ध्यति । किं च "यावद्धि नवमी भवेत्" इत्यत्र यावच्छब्दस्याऽभिव्याप्त्यर्थत्वात्, यच्च रुद्रयामलेऽष्टमेऽध्यायेऽधिकोपवासनिषेधः स न नवम्युपवासनिषेधः । यतः न हि 'नवम्यां नोपवासः नवमोपवासो वा न कार्यः' इति श्रूयते । किं तु सामान्यत उपवासवृद्धिर्निषिद्धा तिथिह्रासश्च विहितः वृद्धिह्रासौ च किञ्चिदपेक्ष्य भवत इति नवमोपवासापेक्षयाऽप्याधिक्यानिषेध इति सम्भवान्नवम्याश्चोपोष्यत्वसत्त्वे प्रमाणसत्त्वे सुतरां तदपेक्षयैव वृद्धिह्रासनिषेधप्रह-

त्तः। अन्यथा चाऽनवस्थितशास्त्रार्थापत्तेः। यदा कदाचित्तिथिवृद्ध्या प्रसक्तौ दशम उपवासो निषिध्यते" इत्यादिमुविस्तृतं-द्वैतनिर्णये। तत्त्रैवाऽवलोक्यम्। रघुनाथभट्टा अपि--

आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम्।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्॥
त्रिरात्रं वाऽपि कर्त्तव्यं सप्तम्यादि यथाक्रमम्।

इति भविष्योत्तरवचनात्,

लब्धाऽभिषेका वरदा शुक्ले चाऽऽश्वयुजस्य तु।
तस्मात्सा तत्र सम्पूज्या नवम्यां चण्डिका बुधैः॥

इति भविष्यवचनाच्च नवम्यां प्रतिपदादिवत्पूजा आवश्यकीत्यर्थाद्दशम्यां देवीविसर्जनं नियमत्यागश्च। अत एव "केशसंस्कारद्रव्याणि" इत्यारभ्य "भुक्त्वेह परमान् भोगान्" इत्यन्तं भविष्यपुराणोक्तप्रतिपदादिविशेषपूजाप्रकारेऽपि नवमीपर्यन्तं पूजामुक्त्वा दशम्यामेव विसर्जनमुक्तम्। कालिकापुराणेऽपि कल्पान्तरे रामरावणयोर्जयपराजयार्थं प्रतिपदि देव्याः प्रबोधनं द्वितीयाप्रभृत्यष्टमीपर्यन्तं रामरावणयुद्धदर्शनपूर्वकं नवम्यां कृतस्य रावणवधस्य दर्शनं चोक्त्वा--

निहते रावणे वीरे नवम्यां सकलैः सुरैः।
विशेषपूजा दुर्गायाश्चक्रे लोकपितामहः॥

इति नवम्यां देव्या विशेषपूजामुक्त्वा, तेनैव च प्रतिपत्प्रभृति पूजां सूचयित्वा--

ततः सम्प्रेषिता देवी दशम्यां शाबरोत्सवैः।

इति दशम्यामेव विसर्जनमुक्तम्। एवं सति यत्केषांचिद् भ्रान्तानां नवमीपारणाऽऽचरणं तन्मूलभूतवचनकल्पनं च तत्सर्वं शिष्टैः कदाचिदष्टमीयुक्तनवम्यां नवमीकृत्ये जाते द्वितीयनवम्यां क्रियमाणां पारणामुपलभ्य तत्र नवमीप्रयुक्तत्वभ्रान्त्या प्रवृत्तं शक्तिभ्रान्त्येवाऽसाधुशब्दप्रयोगे इत्युपेक्षणीयम्" इत्यादिना दशम्यामेव पारणां स्थापयन्ति। कमलाकरभट्टाश्च—"अथ नवरात्रपारणानिर्णयः सा च दशम्यां कार्या" "आश्विने मासि शुक्ले०—सप्तम्यादि यथाक्रमम्"इति हेमाद्रौ धौम्यवचनात्।

नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम्।

इति प्रागुक्तवचनैर्नवमीपर्यन्तं प्रधानभूतपूजाद्युक्तेरुपवासादेश्चाङ्गत्वेन तत्पर्यन्तत्वादादिशब्देनोपवासोक्तेः पूर्वोक्तत्रिरात्रव्रते नवम्या अप्युपोष्यत्वाच्च" इत्यादिना "यानि तु कैश्चिल्लिखितानि नवम्यां पारणाविधायकानि वचनानि तानि हेमाद्र्यादिविरुद्धत्वान्निर्मूलानि। समूलत्वेऽपि यदा दिनद्वये नवमी तदा द्वितीयदिने उपोष्यतिथ्यन्ते पारणा न किं तु नवमीमध्ये कार्येत्येवं नेयानि शिवरात्रिपारणावत्" इत्यन्तेन ग्रन्थेन निर्णयसिन्धौ दशम्यामेव पारणा कर्त्तव्येति प्रतिपादयन्ति। तत्सदुपाख्यरामभट्टा अपि कृत्यरत्नावलीनिबन्धे—"पारणस्याऽपि नियमत्यागरूपस्य विसर्जनकालोत्तरत्वात्तदपि विसर्जनोत्तरं दशम्यामेव कर्तव्यम् अत एव हेमाद्रौ धौम्यवचने नवमी पर्यन्तं व्रतमुक्तम्" इत्यादिना ग्रन्थेन दशमीपारणापक्षमेव स्थापयन्ति। पुरुषार्थचिन्तामणिकारास्तु नवम्यां पारणा कार्या इति

मतान्तरखण्डनपूर्वकं महता विस्तरेण प्रतिपादयन्ति तत्तत्रैव द्रष्टव्यम्। स्मृतिकौस्तुभकारानन्तदेवा अपि नवमीपारणावादिनः तत्तत एवाऽवसेयम्। रघुनन्दनभट्टाचार्यास्तदनुयायिनश्च दशमीपारणावादिनः। प्रकृतग्रन्थकृतस्तु नवमीपारणावादिनः तत्सङ्क्षेपतो यथा—"नवरात्रे नवम्यां पारणं कार्यम्। नवमीपारणविधायकवचननिचयात्। तादृशविधिलिङ्गदर्शनात्, सप्तोपवासविधिबलात्, अष्टमीपर्यन्तोपवासविधेः, सप्तोपवासलिङ्गदर्शनात्, व्रतस्य नवमीपर्यन्तताश्रवणात्, दशमदिवसे पारणानिषेधात्, दशमीपारणनिषेधात्, दशमीविद्धनवमीपारणनिषेधात्, अधिकोपवासनिषेधाच्चेति दशहेतुसद्भावात्। ननु व्रतस्य नवरात्रसमाख्यया समाख्याततत्वात् न्यायतो दशम्यां पारणं प्राप्तम्। तथा हि समाख्याऽपि श्रुत्यादिवद्विनियोजिका। नवरात्रशब्दश्च नवानां रात्रीणां समाहार इत्यस्मिन्नर्थे निष्पन्नो यौगिकः। यौगिकश्च शब्दः समाख्येत्युच्यते। तेन—

नवरात्रोपवासेन यथाशक्त्या नृपोत्तम।

एवं च विन्ध्यवासिन्यां नवरात्रमुपोषितः॥

स्वयं नियमतः कुर्यान्नवरात्रमुपोषयन्।

इत्यादिवाक्येषु नवरात्रशब्देनैव तदुपादायोपवासविधानान्नवमीमभिव्याप्योपवाससिद्धौ दशम्यां पारणमर्थतः सिद्ध्यति। किं च "नवरात्रोपवासेन" इत्यादौ उपवासेष्ववच्छेदकसङ्ख्याकाङ्क्षायां तिथ्यवच्छेदिकयैव सङ्ख्ययैवोपवासपरिच्छेदान्नवमीपर्यन्तत्वेन दशम्यां पारणमर्थसिद्धमेवेति। उक्तं च

धौम्येन--

प्रतिपदादिपूर्णान्तं दिनभेदेन पूजयेत् । इति ।

अत्र च पूर्णायां दशम्यामन्तश्रवणात्पारणायाश्च व्रतान्तरूपत्वाद्दशम्यां पारणमिति चेन्न । स्यात्समाख्ययैवोपवासानिर्णयः यद्युपवासेष्ववच्छेदकसङ्ख्याकाङ्क्षायां प्रमाणान्तरं सङ्ख्याप्रापकं न स्यात् । अस्ति च तत्--

दुर्गोत्सवे स्मृतं देव उपवासस्य सप्तकम् ।
अष्टमे दिवसे होमस्ततः किंचित्तु भक्षयेत् ॥

इति रुद्रयामलीयं वचनम् । श्रुतिश्चेयं 'उपवासस्य सप्तकम्' इतिसमाख्यातो बलवती । ततो न्यूनबला समाख्या नोपवासेष्ववच्छेदिकां सङ्ख्यां विनियुङ्क्ते । तथा चोपवासानां नवसङ्ख्यत्वेन नवम्यभिव्याप्तौ दशम्यां पारणमिति कुत एतत् ? किं च "नवम्यां पारणं कुर्यात्" इत्यादिपारणाकालविधायकश्रुतिसद्भावेनार्थेन लिङ्गेन तत्कल्पना युक्ता । अत्र 'पूर्णान्तं' इतिवचनबलेन दशम्यां पारणमित्युच्यते तदपि न । तस्याऽपि पूर्णायां दशम्यामन्तो विसर्जनं यथा भवति तथा पूजयेदित्यर्थपरतयाऽवश्यं व्याख्येयत्वात्, अन्यथा नवमीपारणविधायकवाक्यैर्विरोधो दशमीविसर्जनविधायकवाक्यैर्भिन्नमूलकता चाऽस्य केन वार्येत । तस्मान्न दशम्यां पारणं किं तु नवम्यामेव" इति सविस्तरं ग्रन्थ एवाऽवलोक्यम् । लोके चेदानीं भट्टमताऽनुयायिनः कांश्चिद्विहाय सर्वत्र नवमीपारणैव समाद्रियमाणा दरीदृश्यते । ये हि प्रतिपद्विषये भट्टमतमङ्गीकुर्वन्ति तेऽपि पार-

णाविषये न तत्सम्मन्यन्ते । दशमीपारणायाः खण्डनं प्रकृत-ग्रन्थग्रन्थयित्रा बहुसमीचीनया रीत्या व्यधायि । नवमीपारणायां च कारणदशकं प्रादर्शि । इत्थं च दशमीपारणावादिनां भट्टप्रभृतीनां नवमीपारणावादिनां धर्माधिकारिप्रभृतीनां च परस्परं मतभेदः प्रदर्शितः । किं च इदमप्यत्राऽवधेयम् । द्वैतनिर्णयादिभट्टग्रन्थेषु नवरात्रे उपवासविशिष्टायाः पूजायाः प्राधान्यं दृश्यते पूजाया मुख्यकालश्च पूर्वाह्णः पारणं च दशम्याम् । प्रकृतग्रन्थकारमते च केवलपूजायाः प्राधान्यम् । पूजाया मुख्यकालश्च नक्तम् । पारणं नवम्यामेव विसर्जनं तु दशम्याम् । इति । "वस्तुतस्तु प्रकृते पूजाया एव प्रधानत्वात्तदन्तस्य विसर्जनस्य दशम्यनुष्ठियमानतया तदन्तःपातिनः पारणस्य व्रतप्रयोगबहिर्भावः शङ्कापथमेव नाऽवतरतीति दिक्" इति प्रकृतग्रन्थकृदुक्तरीत्या स्पष्टमिदं ज्ञायते यत् पारणं व्रतरूपमेव । तथैवाग्रे कण्ठरवेणैव प्रतिपादितं तत्तत्रैव द्रष्टव्यम् । यदा पूर्वदिने अष्टमी, नवम्याः क्षयवशाच्चोत्तरादिने दशमी तदा दशम्यामपि पारणं भवति । अन्यथा कर्मलोपः स्यात् । दशमीपारणविधायकवाक्यानि च तद्विषयाण्येव प्रकृतग्रन्थमते । द्वैतनिर्णयनिर्णयसिन्धुकालतत्त्वविवेचनादिदशमीपारणसमर्थकग्रन्थखण्डनदर्शनरसिकैः 'पुरुषार्थचिन्तामणि'रवलोकनीयः । तत्र च नामग्राहमेषां खण्डनं दृश्यते । अत्र चेदमालोचनीयम्—'कतरः पक्षो युक्ततरः' इति । यद्यपि यथा कुलधर्मं सर्वत्राऽपि व्यवस्था वर्तते, तेन च यस्य कुलपरम्परया यादृशी रीतिस्तथैव

च तेन सर्वदा सर्वथा च वर्तनीयमित्यस्ति तेन च यैः परम्परया दशम्यां पारणा विधीयते तैर्दशम्यामेव कार्या न नवम्याम्। यैश्च निजकुलपरम्परया नवम्यां क्रियते तैर्नवम्यामेव कार्या न दशम्याम्, इत्यपि वर्तते, तथाऽपि चेदमवश्यं समालोचनीयं यद्ग्रन्थतो युक्तितश्च किं युक्तमिति तत्र च ग्रन्थानां प्रामाण्यं ग्रन्थे समुपात्तप्रमाणाऽधीनम्। ग्रन्थकृतो हि स्वपक्षस्थापनाय परपक्षखण्डनाय च प्रवृत्ता रागद्वेषाऽभिनिविष्टचेतसः सर्वाणि वचनानि तत्र विरुद्धान्यपि स्वमताऽनुकूलं व्याख्यापयन्ति। अतिविरुद्धानि तु निर्मूलतामारोप्य बहिर्यापयन्ति। इत्थं सति कः पक्षः समुचित इति निर्णयकरणमतिकाठिनमेव। तथाऽपि यथामनीषं किं चित्सङ्क्षेपतो विचार्यते। इदं प्रथमतोऽवधेयं यत् द्वयोरपि मते नवरात्रशब्दे रात्रिशब्दस्तिथिपर एव। नवरात्रशब्दे च क्वचित्समाख्या क्वचिच्च गुणविधिः, सर्वत्र समाख्या गुणविधिर्वा नास्ति इत्यपि समानं द्वयोः। परं भट्टमते नवम्यामप्युपवासः दशम्यां पारणम्।

दुर्गोत्सवे व्रतं देव उपवासस्य सप्तकम्।

इत्यादिवाक्यानां च व्रतान्तरप्रतिपादकत्वमेव इति। तत्र चेदं वदामः, यद्भट्टैः

दुर्गोत्सवे व्रतं देव उपवासस्य सप्तकम्।

इत्यादीनां व्रतान्तरपरत्वेन नेयत्वमुक्तं तद्विनिगमनाविरहादुक्षेपणीयमेव। किं च

पारणान्ते व्रतं ज्ञेयं व्रतान्ते तद्विभोजनम्।

इतिवचनविरोधो भट्टमते। तथाहि सङ्कल्पक्षणमारभ्य पारणान्तक्षणपर्यन्तं विततभावनान्तनिष्पातित्वेन पारणस्याऽपि व्रतरूपत्वम्। व्रतत्वेऽपि प्रधानत्वं नेत्यन्यदेतत्। नैतावता व्रतत्वक्षतिः। तथा च नवम्यनुष्ठीयमानव्रतस्य नवमीपर्यन्तता सिद्ध्यतीति न दोषः। नन्विदं व्रतप्रयोगबहिर्भूतमेवाङ्गमस्तु "व्रतान्ते तद्विभोजनम्" इत्यनेन व्रतसमाप्तौ तच्छ्रवणात्। यथा "संस्थाप्य पौर्णमासं वैमृधमनुनिर्वपति" इत्यनेन पौर्णमाससमाप्तौ वैमृधो विधीयते। संस्थापनान्तशब्दयोश्च पर्यायत्वादितिचेत् नैवम्। "पारणान्तं व्रतं ज्ञेयम्" इत्यस्य पारणया अन्तः समाप्तिर्यस्येत्यर्थपरत्वेन पारणस्य व्रतप्रयोगबहिर्भावाऽभावात्। तथा च पूर्वोत्तरयोरेकार्थत्वमेव इति स्थिते, दशम्यां पारणायां क्रियमाणायां व्रतस्य दशरात्रताऽऽपत्तिः, नवमीपारणायां तु नैष दोषः। किं च यथा नवमीपारणाविधायकानि वचनानि बहूनि श्रूयन्ते न तथा दशमीपारणाविधायकानि। किं च यावत्कालं पारणं न कृतं तावत्पर्यन्तं प्रतितिथि प्रधानतया विहिता पूजा करणीयैव। अन्यथा व्रतलोपः स्यात्, तेन दशमीपारणापक्षे दशम्यां मुख्यभूता पूजा प्रातः करणीयैव, तदनन्तरं पारणं करणीयमितीत्यपि व्रतस्य दशरात्रताऽऽपत्तिः। भट्टमते च नवरात्रे प्रातःपूजैव मुख्या इति नवमीपारणावादिप्रकृतग्रन्थपक्ष एव समुचित इति निश्चीयते। ननु भट्टमते उपवासविशिष्टायाः पूजायाः प्राधान्येन दशम्यां च उपवासरहितपूजायाः क्रियमाणतया न दशम्यां मुख्यभूता पूजा क्रियते

इति न दशरात्रताऽऽपत्तिरिति चेदसमञ्जसमिदमुच्यते । तथा हि यदुच्यते उपवासविशिष्टायाः पूजायाः प्राधान्यमिति भ्रान्तिरेव सा । यतः

एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन च ।
अथ वा सर्वनक्तैश्च नवरात्रं समापयेत् ॥

इत्यत्र एकभक्तादीनां चतुर्णामपि वैकल्पिकतयोक्तत्वात्कोऽप्येकः पक्षोऽङ्गीकरणीयः। परमिदं न वक्तुं शक्यते यदुपवासकरणमेव मुख्यमिति । चतुर्णामपि साम्येन प्राधान्यस्योक्तत्वात् । यद्यप्यत्र परिश्रमन्यूनाऽधिक्यवशेन फलतारतम्यकल्पनेन उपवासानां फलविशेषजनकत्वकल्पनया उपवासपक्षस्यैव मुख्यत्वं सम्भवति, तथाऽपि उपवासविशिष्टाया एव पूजायाः प्रधान्यमिति कथनमसमञ्जसमेव । तथा हि येन पुरुषेण प्रथमवर्षे उपवासपक्षोऽङ्गीकृतः, द्वितीयवर्षे च रुग्णतया उपवासाऽसमर्थतया एकभक्तादिपक्षोऽङ्गीकृतस्तत्र न को ऽपि प्रत्यवायः 'एकभक्तेन' इतिवचनानुरोधात् । भट्टमते तु उपवासविशिष्टाया एव पूजायाः प्राधान्येन तदानीमुपवासरहितपूजायाः समाचरणात् व्रताऽसम्पन्नत्वापत्तिः । धर्माधिकारिमते तु न तथा । यच्चुच्येत 'उपवासविशिष्टाया एव पूजायाः प्रधान्यमित्यस्य स्वीकृततत्तद्विशिष्टाया एव पूजायाः प्राधान्यं न केवलपूजाया इति तात्पर्यमिति तदपि यद्वातद्वैव । साधारणासाधारणमध्ये असाधारणविशिष्टस्यैव प्रधानत्वाङ्गीकारात् । दर्शपूर्णमासादौ प्रयाजादीनामिव । तस्मादुपवासादिविशिष्टाया एव पूजायाः प्राधान्यमिति

कथनमसङ्गतमेव। तेन च तत्तत्कालविशिष्टाया एव पूजायाः प्राधान्यमिति सर्वैरप्यङ्गीकरणीयमेव। यच्च धर्माधिकारि-प्रभृतिभिः "नक्तव्रतमिदं मुख्यम्" इत्युच्यते पुनः पुनः, तत्र नक्तव्रतपदस्य नक्तकालकृतपूजायाः प्राधान्यम् इत्यर्थः, न तु दिवाभोजनत्यागपुरःसररात्रिभोजनरूपनक्तव्रतमिति। अत एव धर्माधिकारिकुले एकभक्तादिपक्षचतुष्टयादुपवासपक्ष एवाऽङ्गीकृतो दृश्यते। तथैवेतरेषामपि बहूनां विदुषां कुल-रीतिः। ते हि "दुर्गोत्सवे" इत्युक्तवचनानुसारं सप्तोपवासान् विधायाऽष्टम्यां किंचिद्भक्षं प्रकल्प्य नवम्यां पारणामाचरन्ति विसर्जनमात्रं च दशम्यामिति न नवरात्रत्वक्षतिः। एवं सति भट्टमतेऽपि कालविशिष्टाया एव पूजायाः प्राधान्यं वाच्यम्। नोपवासविशिष्टायाः तन्मते मुख्यः कालश्च पूर्वाह्णः तेन पूर्वाह्ण-विशिष्टपूजाया एव प्राधान्यात्तस्याश्च नवतिथिषु विहितत्वात् व्रतस्य च नवरात्रत्वात् रात्रिशब्दस्य च तिथिपरत्वात्, पारणान्तस्यैव च व्रतत्वात् पारणापर्यन्तं पूजाया अवश्यं कर-णीयत्वात् दशमीपारणायां पूर्वाह्णपूजाऽवश्यमाचरणीयैवेति भ-ट्टमते दशरात्रतापत्तिर्नोपायसहस्रेणाऽपि वारयितुं शक्यते इति नवमीपारणापक्ष एव समुचितः। यच्च पूर्वाह्णस्यैव मुख्यपूजा-कालत्वप्रतिपादनं तदपि शक्तिपूजनरहस्यज्ञानविधुराणामेव शोभते। परं महदिदमाश्चर्यास्पदं यत् शक्तिपूजकत्वेन प्रसि-द्धानां वङ्गीयविदुषां रघुनन्दनभट्टाचार्यादीनां मते कथं पूर्वाह्णस्य देवीपूजायाः प्रधानकालत्वमुक्तम्? अथ वा "ज्ञानिनामपि

चेतांसि" इतिस्थित्या तदपि समीचीनमेवेत्यलमियतैव । मतद्वय-मिदं तत्तद्ग्रन्थेषु सुविशदमुपपादितमिति तत एवाऽवलोकनीयम् । एवं च कृते विचारे मतद्वये कतरत्समीचीनमिति मनीषिण एव विचारयन्तु ।

इत्थं विचारितं पारणावादस्थलं सङ्क्षेपेण । अतः परमे-तद्ग्रन्थस्य किं चिद्वैशिष्ट्यमुच्यते—अमुष्य ग्रन्थस्य लेखो ग-म्भीरः सरलः प्रसन्नः सुपरिणतश्चेति मनो रञ्जयन् प्रतिपाद्य-तत्त्वानि पाठकचेतःसु प्रतिष्ठापयति । तत्र कानिचिदुदाहरणानि प्रदर्श्यन्ते—"एवं युक्तिमुक्ताकरम्बिते वचनचिन्तामणौ द्युमणौ परिस्फुरति नवरात्रशब्दस्य नामधेयत्वमनङ्गीकुर्वतां प्राच्याना-मतितरां तमोवलितत्वमवगम्यते" ( पृ०८ ) "तद् रूपनाराय-णादिसर्वदेशीयशिष्टपरिगृहीतनिबन्धेषु प्रत्यक्षपरिदृश्यमाना-नामपि वचनानां करकङ्कणन्यायेनाऽपलापकौशलमायुष्मताम् । यत्पुनरेतेन तस्य नक्तव्रतत्वादिति वदन् माधवोऽपि प्रत्यादिष्ट इति तदपि भ्रान्तप्रलपितमेवेत्युपेक्षणीयम् । यतो हि ऋङ्मात्राऽन-भिज्ञैराधुनिकैश्चतुर्विंशतिशाखापारदृश्वनामार्याणां माधवाचार्या-णामधिक्षेपः कलिकालप्राबल्यमाचष्टे" ( पृ०१६ ) "तदेवं सि-द्धा नवम्यां पारणा । एवं च युक्तिमुक्ताकरम्बिते वचनचिन्ता-मणौ परिस्फुरति बुद्धिदरिद्राणां भिक्षालब्धसमाख्यामात्रेण कालाऽतिवाहनमातितरां दुरदृष्टं गमयति" ( पृ०१०९ ) इत्यादि । अहो रमणीयाऽस्य लेखशैली । प्रतिविषयं चाऽनेन ग्रन्थकृता प्रथमं ऋषिवचनानि निर्दिश्य मीमांसान्यायैस्तत्सङ्गतिमभिधाय

तैरेव निजयुक्तिभिश्च परमतखण्डनं विधाय स्वसिद्धान्तः प्रत्यष्ठापि, किंबहुनोक्तेन निःसंशयं किलाऽस्य ग्रन्थस्य शैली सर्वाङ्गपूर्णतया श्लाघ्यतमा पुरोभागिनामपि हृदयं क्षणमात्रं मस्तकं सानन्दं धूनयत्येवेतीयतैव ग्रन्थपरिचयेनालम् । रसिकैर्ग्रन्थ एव सर्वमवलोकनीयम् ।

---

## ग्रन्थकृत्परिचयः ।

ग्रन्थकृद्विषयेऽपि सङ्क्षेपेणोच्यते । प्रकृतग्रन्थनिर्माता विनायकपण्डितः नन्दपण्डिताऽपराऽभिधः मुद्गलसगोत्रः काशीस्थमहाराष्ट्रभूमीसुरः धर्माधिकारीत्युपाख्य आसीत् । अस्य पिता प्रसिद्धो विद्वान् रामपण्डिताऽभिध आसीत् । इति प्रकृतग्रन्थान्तिमपद्यादवसीयते । अयं हि पदवाक्यप्रमाणपारावारपारीणः मूर्तिमान् धर्म एव नैकनिबन्धनिर्माणप्रतिष्ठापितनिष्कलङ्कतुहिनकिरणच्छविमहनीयकीर्तिरनेकभूपालमुकुटमणिमञ्जरीनीराजितचरणयुगलः सं० १६१०–१६९० वैक्रमवत्सरपर्यन्तं काश्यां विद्यमान आसीत् । परमकृष्णभक्तोऽयं निजकुलजसर्वानपि पूर्वापरान् पुरुषानतिशय्यासीत् । अस्य वंशे तत्तच्छास्त्रीयमर्मविज्ञानां सर्वोच्चशिखरमारूढा बहवः पण्डितोत्तमा अभूवन् । वंशोऽयमतिविस्तृतिमागत्य सम्प्रति बहुषु देशेषु नैकाभिः शाखाभिर्विराजते इति बहुलेखनीयमपि विस्तरभिया नाऽत्र लिख्यते । इतोऽधिकमनल्पं मया "शुद्धिचन्द्रिका" भूमिकायां लिखितमिति तत एवाऽवसेयम् । महता विस्तरेण

च धर्माधिकारिवंशविषयकमैतिह्यं स्वतन्त्रपुस्तकरूपेण यथाऽवसरं प्रायोऽचिरादेव प्रकाशयिष्यते इति जिज्ञासुभिस्तत्रैवाऽवलोकनीयम् । प्रकृतग्रन्थमात्रदर्शिनां कृते ज्ञातमूलपुरुषादारभ्य प्रकृतनिबन्धप्रणेतृपर्यन्तं वंशवृक्षः प्रदर्श्यते—




धर्माधिकारिवंशः किलाऽतिविस्तृतः स यावच्छक्यं सम्पाद्य अचिरमेव पुस्तकाकारेण प्रकाशयिष्यते । प्रकृतग्रन्थकृता बहवो निबन्धाः प्रणीतास्तत्र ज्ञातास्त्वेते—

१ काशीप्रकाशः

२ तत्त्वमुक्तावलिः ( मुद्रिता )
३ दत्तकचन्द्रिका
४ दत्तकमीमांसा=पुत्रीकरणमीमांसा ( मुद्रिता )
५ नवरात्रप्रदीपः ( मुद्रितः )
६ विद्वन्मनोहरा=पराशरस्मृतिटीका ( मुद्रिता )
७ माधवानन्दम्=महाकाव्यम् ।
८ प्रमिताक्षरा=मिताक्षराटीका
९ केशववैजयन्ती=विष्णुस्मृतिटीका
१० विनायकशान्तिपद्धतिः
११ शुद्धिचन्द्रिका=षडशीतिटीका ( मुद्रिता )
१२ शूद्राऽधिकारमीमांसा
१३ श्राद्धकल्पलता
१४ श्राद्धमीमांसा
१५ सापिण्ड्यनिर्णयः
१६ संस्कारनिर्णयः ( स्मृतिसिन्धोरुद्धृतः )
१७ स्मृतिसिन्धुः
१८ हरिवंशविलासः—
  १ दानकौतुकम् ।
  २ कालनिर्णयकौतुकम् ।
  ३ आह्निककौतुकम् ।

एतद्ग्रन्थादिविषयेऽपि यथाऽवसरं प्रकाशयिष्यतेऽग्रे सविस्तरमैतिह्यमिति विरम्यते ग्रन्थकृत्परिचयात् ।

---

## उपसंहारः-

अथैतद्ग्रन्थप्रकाशनसाधनभूतं पुस्तकद्वयम् । तत्रैकं प्रकृतग्रन्थकृन्नन्दपण्डिताऽपराभिधानविनायकपण्डितैकादशपुरुषाणामस्मत्सुहृद्वराणां धर्माधिकारि-पं० लक्ष्मीधरपन्तानां परम्परासंरक्षितमशुद्धिबहुलं च । अत्रान्ते संवत् १८१२ इति लेखकालो दृश्यते । प्रथमपत्रप्रथमपृष्ठे 'हरीपण्डितस्येदं पुस्तकं' इति लेखो वर्त्तते । पुस्तकेऽत्र ७९ पत्राणि प्रतिपत्रमेकादश पङ्क्तयः प्रतिपङ्क्ति पञ्चत्रिंशदक्षराणि । द्वितीयं च पुस्तकं ग्रन्थकृदग्रजमहामहिमशालि "श्राद्धदीपिका"ज्योतिषरत्नसङ्ग्रहा" दिनिबन्धनिर्मातृ-गोविन्दपण्डितवंश्यानामिदानीं प्रयागे निवसतामस्मन्मित्रधर्माधिकारि-पं० जयकृष्णपन्तानां वंशपरम्परासंरक्षितं प्रायः शुद्धमन्तिमपत्ररहितं लेखकालरहितं प्राचीनं च । अत्र पत्राणि ३४ प्रतिपत्रं पङ्क्तयः १३ प्रतिपङ्क्त्यक्षराणि ३७ । एतत्पुस्तकद्वयाधारेण सुसम्पन्नमस्य ग्रन्थस्य मुद्रणकार्यम् । अत्र च याभ्यां निजपुस्तकप्रदानेन मदुत्साहवर्धनेन च ग्रन्थप्रकाशने साहाय्यमाचरितं तौ सुहृद्वर-धर्माधिकारि-पं०लक्ष्मीधरपन्त पं० जयकृष्णपन्तौ हृदयेनाऽभिनन्दामि । अथवा कृतमभिनन्दनेन कर्तव्यमेवैतदनयोः, यन्निजपूर्वजनिर्मितनिबन्धानां प्रकाशनम् । कृतकर्तव्यकर्मविषयेऽनुचितमपि सौहृदवशेन मया समाचरितमभिनन्दनं तौ स्वीकरिष्यत इति सुदृढो मे प्रत्ययः । अत्र प्रमाणत्वेन समुपात्तानां ग्रन्थादिनाम्नामकारादिक्रमेण सूचीपत्रं निर्माय्याऽन्ते निवेशितम् । प्रतिपादितविषयज्ञानाय विषयसूची-

ग्रन्थारम्भे निवेशिताऽस्ति । ग्रन्थोल्लिखितपारिभाषिकशब्दज्ञानाय तत्सूच्यपि निर्दिष्टाऽत्र वर्तते । एवं यथाशक्ति ग्रन्थमिमं परिष्कृत्य संशोध्य सम्मुद्र्य सरस्वतीभवनग्रन्थमालायां प्रकाशितं नीरक्षीरन्यायेनाऽवलोक्य सुधीवराः सफलयिष्यन्ति मत्परिश्रममिति बाढं समाशासे ।

अन्ते च—येषां कृपया ग्रन्थोऽयं प्रकाशितस्तान् मत्समुन्नतिहेतुभूतान् माननीय पं० गोपीनाथकविराज एम्. ए. ( प्रिन्सिपल् गवर्नमेन्टसंस्कृतकालेज वनारस ) महोदयान् सप्रश्रयमभिनन्द्य मदीयनिरुपधिहितैषिणः साहित्याचार्य पं० नारायणशास्त्रीखिस्ते (सरस्वतीभवनपुस्तकालयाध्यक्ष) महोदयांश्च सादरमभिनन्द्य साञ्जलिबन्धं परमेशं श्रीकाशीविश्वनाथमभिवन्द्य समापयाम्यमुं लेखमिति शम् ।

सरस्वतीभवनम्, काशी ।
सं० १९८४

वरकलोपाख्यः
**वैद्यनाथशास्त्री ।**

श्रीः

## नवरात्रप्रदीपे समुपात्तानां विशिष्टशब्दानां सार्था सूची ।

नवरात्र=तिथिनवकक्रियमाणपूजाप्रधानात्मकं व्रतम् । अतिविस्तृतं ग्रन्थे ।

एकभक्त=एकवारभोजनात्मकव्रतम् ।

नक्त=दिवाभोजनत्यागपुरःसररात्रिभोजनात्मकव्रतम् ।

अयाचित=याच्ञां विना लब्धस्य भोजनात्मकव्रतम् ।

नक्तव्रत=नक्तकालक्रियमाणपूजाप्रधानं व्रतम् ।

महाष्टमी=आश्विनशुक्लाऽष्टमी ।

महानवमी=आश्विनशुक्ला नवमी ।

किंचिद्भक्षण=अव्रतघ्नापोमूलादिभक्षणम् ।

विजयकाल=आश्विनशुक्लदशम्या एकादशो मुहूर्त्तः ।

---

श्रीः

## नवरात्रप्रदीपस्थविषयसूची ।

॥ श्रीः ॥

धर्माधिकारिविनायकपण्डितविरचितः—

# नवरात्रप्रदीपः



श्रीगणेशाय नमः । श्रीएकवीरायै नमः ।

अभिनन्द्य जगद्वन्द्यपदद्वन्द्वं विनायकम् ॥

नवरात्रविधिं वक्ति श्रीविनायकपण्डितः ॥ १ ॥

अमुष्मिन्सन्दर्भे वचनरचनायामपि मनाङ्

मनः कर्त्तुं शक्यं यदपि हि न गीर्वाणगुरुणा ॥

तथापि श्रीदुर्गाचरणपरिचर्याव्रतविधे—

र्विचारे या शक्तिर्मम स खलु तस्यैव महिमा ॥ २ ॥

## अथ नवरात्रव्रतनिर्णयः ।

तत्रादौ नवरात्रशब्दो विचार्यते, किमयं कालवचनः उत कर्मवचन इति । तत्र कालवचन इतिं प्राप्तम् । अनुशासनसामर्थ्यात् । तथाहि "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" ( पा० सू० ५-४-७५ ) इत्यतोऽच्प्रत्ययानुवृत्तौ "तत्पुरुषस्याङ्गुलेः सङ्ख्याऽव्ययादेः" ( पा०

सू०५-४-८६ ) इत्येतस्मात्सङ्ख्यानुवृत्तौ "अहः सर्व्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः" ( पा०सू०५-४-८७ ) इत्यनेन नवानां रात्रीणां समाहार इति विग्रहे समासान्ताऽच्प्रत्ययविधानान्नवरात्रइति शब्दो निष्पद्यते। तथा च रात्रिसमुदायात्मककालविशेषस्य शब्दसामर्थ्यादेव प्रतीयमानत्वाद्यौगिक एवायं कालवचनो नवरात्रशब्दः। न चाऽश्वकर्णसप्तपर्णादिवदवयवशक्तिमनपेक्ष्यैवायं प्रयुज्यत इति वाच्यम्। तथात्वे तादृशशब्दस्वरूपानिष्पत्तेः। अतो न रूढः। अवयवशक्त्यैवोपपत्तौ समुदायशक्तिकल्पने गौरवात्। अवयवाऽर्थाऽतिरेकेणाऽर्थान्तराऽप्रतीतेश्च। तथा न योगरूढोऽपि। तत्र हि योगरूढिर्भवति यत्राऽतिप्रसक्ते योगार्थे प्रयोगप्राचुर्येण शब्दस्य व्यवस्थाऽऽश्रीयते। यथा पङ्कजादौ। न च प्रकृतेऽतिप्रसङ्गोऽस्ति। चैत्राश्विनसम्बन्धिनोरेव रात्रिसमुदायविशेषयोस्तत्प्रयोगात्। न चाहर्गणे क्रतुविशेषे "तं नवरात्रेण याजयेत्" इत्यादिवाक्यविहिते नवरात्रशब्दप्रयोगादतिप्रसङ्ग इति वाच्यम्। तत्र कर्मनामधेयत्वेन कालपरत्वाभावात्। न चान्यत्रापि नवसङ्ख्याकरात्रिसमुदाये 'नवरा-

त्रेणाऽऽगतोऽस्मि' इत्यादौ नवरात्रशब्दप्रयोगादतिप्रसङ्गतादवस्थ्यमिति वाच्यम् । तस्यास्मत्साधकत्वात् । तद्यथा—यतश्चैत्राश्विनसम्बन्धिरात्रिसमुदायविशेषे अन्यत्रापि नवसङ्ख्याकरात्रिसमुदाये नवरात्रशब्दप्रयोगः । अत एव शुद्धयौगिकत्वम्, न योगरूढत्वमिति । अत्रोच्यते । नाऽयं नवरात्रशब्दः कालवचनः । प्रतिपदि तदारम्भविधानाऽनुपपत्तेः । प्रतिपद्रूपे काले कर्मणो विधानं शक्यम्, न तु नवरात्ररूपस्य कालस्य । तस्य पुरुषकृत्यसाध्यत्वात् । विधानं च नारदीयपुराणे श्रूयते—

> आश्विनस्य सिते पक्षे नवरात्रव्रतं शुभम् ।
> आदौ प्रतिपदं प्राप्य तिथिं चण्डीमनःप्रियाम् ॥

कुर्यादिति शेषः । रुद्रयामलेऽपि—

> आश्विने मासि सम्प्राप्ते शुक्लपक्षे विधेस्तिथिम् ।
> प्रारभ्य नवरात्रं स्याद् दुर्गा पूज्या तु तत्र वै ॥

प्रतापरुद्रनिबन्धे धौम्योऽपि विदधाति—

> आश्विने शुक्लपक्षे तु कर्त्तव्यं नवरात्रकम् ।
> प्रतिपदादिक्रमेणैव यावद्धि नवमी भवेत् ॥

सप्तम्यन्तोऽपि क्वचित्पाठः । देवीपुराणेऽपि—

मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः ।

सम्पूज्य नवदुर्गां च नक्तं कुर्य्यात्समाहितः ॥ इत्यादि ।

न च नवसङ्ख्याकरात्रिसमुदायसाध्यत्वाद् व्रतस्य लक्षणया नवरात्रशब्दवाच्यत्वमिति वाच्यम् । 'नवरात्रव्रतं कुर्यात्' इति विधौ लक्षणाप्रसङ्गे "न विधौ परः शब्दार्थः" इतिन्यायविरोधात् । न च "न विधौ परः शब्दार्थः" इत्यत्र विधिशब्देन प्रत्ययो गृह्यते न तु वाक्यम् । तेन प्रत्ययांश एव न लक्षणा तद्वाक्यान्तर्गतशब्दान्तरेऽपीति वाच्यम् । "आद्यमेकादशेऽहनि" इत्यत्र एकादशाहशब्दस्य आशौचाऽनन्तरदिनोपलक्षकत्वे तन्न्यायविरोधस्य भट्टविश्वेश्वरैरप्यङ्गीकृतत्वात् । किं च तस्य कालपरत्वे "प्रारभ्य नवरात्रं स्यात्" इत्यादौ नपुंसकलिङ्गाऽनुपपत्तिः । "रात्राह्नाहाः पुंसि" ( पा०सू० २—४—२९ ) इत्यनेन रात्रान्तस्य पुल्लिङ्गत्वाऽनुशासनात् । अस्तु वा "सङ्ख्यापूर्वं रात्रं क्लीबम्" ( का० वा० ) इति वार्तिकेन नपुंसकत्वम्, तथाऽपि पूर्वोक्तयुक्त्या सामानाधिकरण्येन च कर्मनामधेयत्वमेव

युक्तम् । न च गुणविधित्वम् । उद्भिद्वता यागेनेतिवत् नवरात्रवता व्रतेनेति मत्वर्थलक्षणाप्रसङ्गात् । न चाग्नये होत्रमस्मिन्निति नव रात्रयो यस्मिन्निति व्युत्पत्त्या नवरात्रशब्दो गुणविधिरिति वाच्यम् । तथात्वे नवरात्रीति शब्दस्वरूपापत्तेः । षष्ठ्यर्थलक्षणाऽऽपत्तेश्च । नाऽप्यत्यन्तसंयोगे द्वितीयेयम् । "नवरात्रीरभिव्याप्य व्रतं कुर्यात्" इतिवैय्यधिकरण्येनान्वयाऽऽपत्तेः । सम्भवति सामानाधिकरण्येन कारकविभक्तित्वे उपपदविभक्तित्वकल्पनाऽयोगाच्च । यत्र तु 'नवरात्रव्रतम्' इति समस्तं पदं, तत्र कर्मधारयेणाभेदाऽवगमादेकार्थत्वेन सुतरां नामधेयत्वसिद्धिः । तस्मान्नायं कालवचनः । किंतु दर्शपूर्णमासद्विरात्रत्रिरात्रद्वादशाहादिशब्दानां यथा तत्तत्कालयोगेन निमित्तेन कर्मनामधेयता तथा नवसङ्ख्याकरात्रिसमुदाययोगमेव निमित्तमादाय नवरात्रशब्दोऽपि कर्मनामधेयम् । तत्प्रख्यन्यायात् । तत्प्रख्यं च शास्त्रं देवीपुराण एव—

आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव ।
देविकापूजने प्रोक्ताः सर्वकामफलप्रदाः ॥ इति ।

हेमाद्रौ धौम्यवाक्यमपि । अत्र च पूर्वोत्तरार्द्धाभ्यां नामधेयत्वगुणविधित्वे स्पष्टीकृते । तद्यथा—यदाश्विने शुक्लपक्षे नवरात्रव्रतं कर्त्तव्यं तत्प्रतिपदादिक्रमेण यावन्नवमीति । अन्यथा गुणे गुणान्तरविधानाऽऽपत्तेः । एवं च

मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः

सम्पूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः ॥

इति सप्तम्यन्तेनाऽभिहिते कर्मण्येव प्रधानभूतपूजानन्तरमङ्गभूतनक्तविधानमुपपद्यते । तेन तत्कालपरत्वे युज्यते । अङ्गस्य तस्याङ्गान्तराऽपेक्षाऽभावात् । "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्" इति न्यायात् । यत्तु श्रुत्या गुणविधित्वं, न तु लक्षणया कर्मकालत्वमिति कैश्चिदुक्तं तद् गुणविधित्वेऽर्थान्तरत्वाच्चिनामुद्भिदादीनामर्थान्तरे यागे वृत्तिर्मत्वर्थलक्षणया स्यात् । उद्भिदता यागेनेतिनामधेयत्वे तु श्रुत्येतिपार्थसारथिलिखनविरुद्धम् । नामधेयेषु सर्वेषु श्रुतिवाक्यस्यैव शक्तिग्राहकत्वात् । न च तत्र तत्र यजतिसामानाऽधिकरण्येन नामधेयत्वम्, प्रकृते तु न तथेति वाच्यम् । "नवरात्रव्रतं शुभम्" इत्यादिवाक्ये कर्मसा-

मानाऽधिकरण्यस्य प्रकृतेऽपि विद्यमानत्वात् । न च करणीभूतकर्मसामानाधिकरण्यं नामधेयत्वे साधकम्, न तु प्रथमान्तसामानाधिकरण्यमिति वाच्यम् । "अग्निहोत्रं जुहोति" इत्यत्रेव करणत्वस्योत्तरकालकल्प्यत्वात् । न च कालयोगेन नामधेयत्वे यादृशा कालवचनस्तादृशस्यैव कर्मनामधेयत्वम् । यथा दर्शद्विरात्रादिशब्दानाम् । प्रकृते तु न तथा कालवचनस्य पुल्लिङ्गत्वात्, कर्मवचनस्य च नपुंसकलिङ्गत्वादिति वाच्यम् । कालवचनस्याऽपि स्त्रीलिङ्गस्य पौर्णमासीशब्दस्य कर्मनामधेयत्वे 'पूर्णमास' इति पुलिङ्गत्वविकारयोर्दर्शनात् । न चायं पूर्णमासशब्दो न पौर्णमासीशब्दविकारः किं तु पूर्णो मासोऽस्मिन्निति व्युत्पत्तावन्यपदार्थस्य पुल्लिङ्गस्य तिथेर्विशेष्यत्वात्तिथिविशेषवचन एव । तेन नायं दृष्टान्त इति वाच्यम् । "लिङ्गमशिष्यं लोकाश्रयत्वात्तस्य" इति महाभाष्यकारवचनाऽनुरोधेन लिङ्गमात्रविकारस्याऽप्रयोजकत्वात् । किं च

नवरात्राभिधं कर्म नक्तव्रतमिति श्रुतम् ।

धर्मार्थकाममोक्षार्थमनुष्ठेयं द्विजातिभिः ॥

इतिनृसिंहप्रसादोदाहृतभविष्योत्तरवाक्ये "नवरात्राभिधं कर्म" इतिश्रुत्यैव साक्षान्नवरात्रशब्दस्य कर्मनामधेयत्वमाविष्कृतमित्यलं बहुनोक्तेन । तस्मान्नवरात्रशब्दः कर्मनामधेयमिति सिद्धम् । एवं युक्तिमुक्ताकरम्बिते वचनचिन्तामणौ द्युमणौ परिस्फुरति नवरात्रशब्दस्य नामधेयत्वमनङ्गीकुर्वतां प्राच्यानामतितरां तमोवलितत्वमवगम्यते । ननु नवरात्रकालसम्बन्धस्य तिथिह्रासवृद्ध्यादावसत्त्वेनानियतत्वात्कथं नवरात्रशब्दप्रवृत्तिनिमित्ततेति चेत् नैवम् । रात्रिशब्दस्य तिथिपरत्वात् । तिथिपरता चाऽवश्यं तस्य वाच्या । अन्यथा कालपरतायामपि तस्य तिथिवृद्ध्यादौ विवक्षितार्थाऽसिद्धेः । अत एव डामरकल्पे—

तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम् ।

इति साक्षादेवाऽभिहितम् । न च प्रतिपदमारभ्य यथा नवाहोरात्राणि व्याप्नोति व्रतं तथा कार्यमिति वाच्यम् । तथा सति तिथिक्षयवशेनाष्टरात्रादौ नवम्यां पारणविधानाऽनुपपत्तेः । न चास्तु तथेति वाच्यम् ।

दशम्यां पारणनिषेधात् । तस्य चाऽग्रे वक्ष्यमाणत्वात् । तस्माद्रात्रिशब्दस्तिथिपरः । एवं च भविष्यपुराणीयं लिङ्गमपि घटते । यथा—

प्रथमा द्वितीया तृतीया चतुर्थी च नराधिप ! ।
एतास्तु एकभक्तेन प्रवदन्ति मनीषिणः ॥
पञ्चमी च तथा षष्ठी सप्तमी चाष्टमी नृप ! ।
उपवासपरो भूत्वा पूजयेच्चण्डिकां बुधः ॥ इति

तथा भविष्योत्तरेऽपि—

प्रतिपद्याहृतं खड्गं द्वितीयायां धृतं धनुः ।
तृतीयायां करे चक्रं चतुर्थ्यां चर्म्म निर्म्मलम् ॥
पञ्चम्यामाददे शूलं षष्ठ्यां तु परशुं तथा ।
गदामबिभ्रत्सप्तम्यामष्टम्यां शक्तिमुत्तमाम् ।
नवमी च सदा देव्या मूर्त्तिर्दैत्यविनाशनी ॥ इति ।

यद्यहोरात्रपरतैव विवक्षिता स्यात्तर्हि प्रतिपदादिशब्दैर्नाभिदध्यात्, किं तु प्रथमाद्यादिशब्दैर्ब्रूयात् ब्रूते च तथा । तस्मात्तिथिपर एव रात्रिशब्दः । एवं च

तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम् ।

इत्यपि डामरकल्पीयं वचनं सङ्गच्छते । अत एव

देवीपुराणे आहत्यैव नवतिथय इत्युक्तम् । यथा—

आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव ।
देविकापूजने प्रोक्ताः सर्वकामफलप्रदाः ॥ इति ॥

एतेन "दशरात्रमशौचकम्" इत्यादौ दशरात्रशब्दवदेव नवरात्रशब्दोऽपि नवाऽहोरात्रपर इति निरस्तम् । न च तत्रापि तिथिपरतायां मानमस्ति । वस्तुतस्तूत्पत्तिवाक्ये कालसम्बन्धो नियतोऽपेक्षितः। यथाऽग्नेयाद्युत्पत्तिवाक्ये दर्शादिसम्बन्धः । तस्यैव शब्दप्रवृत्तिनिमित्तत्वात् । न तु प्रयोगकालीनस्य । तस्याऽप्रयोजकत्वात् । प्रकृते त्वस्ति नियम एव (?) उत्पत्तिवाक्येऽसौ । उत्पत्तिवाक्यं च नारदीये श्रुतम्—

आश्विनस्य सिते पक्षे नवरात्रव्रतं शुभम् ।
आदौ प्रतिपदं प्राप्य तिथिं चण्डीमनःप्रियाम्॥ इति ।

कुर्यादिति शेषोऽर्थसिद्ध एव । रुद्रयामलेऽपि—

आश्विने मासि सम्प्राप्ते शुक्लपक्षे विधेस्तिथिम् ।
प्रारभ्य नवरात्रं स्याद्दुर्गा पूज्या तु तत्र वै ॥ इत्यादि ।

अनयोश्चान्येषां च भविष्यभविष्योत्तरादीनां भूयस्त्वेन "उभयश्रुति" इतिन्यायेनोत्पत्तिरवसेया ।

अथेदं विचार्यते—एकभक्तनक्ताऽयाचितोपवासव्रतानामिदं कतमदिति । तत्र चतुर्विधमपीति प्राप्तम्, प्रकारचतुष्टयस्याऽपि तत्र श्रूयमाणत्वात् । तथा हि नृसिंहप्रसादोदाहृतेषु स्कान्दमार्कण्डेय भविष्योत्तरेषु—

एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन च ।
अथ वा सर्वनक्तैश्च नवरात्रं समापयेत् ॥

कालिकापुराणेऽपि—

अथ वा नवरात्रं च सप्तपञ्चत्रिकादि वा ।
एकभक्तेन नक्तेनाऽयाचितोपोषितैः क्रमात् ॥

नारदीयेपि—

स्वयं नियमतः कुर्यान्नवरात्रमुपोषयन् ।
पयोव्रतफलाशित्वं नक्तभोज्यमयाचितम् ॥
एकभक्तं च सुभगे यथाशक्त्या समाचरेत् ।

रुद्रयामलेऽपि—

उपोषणेन नक्तेन एकभक्तेन वा पुनः ।
हविष्यान्नेन वा देव प्रत्यहं पूजयेच्छिवाम् ॥

भविष्यपुराणेऽपि—

अयाची त्वथ वैकाशी नक्ताशी त्वथ वाग्यदः ।

आरभ्य नन्दिकां राजन् ! यावद्धि नवमी भवेत् ॥

वाय्वदो वायुभक्षः। नन्दिका प्रतिपदा। प्रथमोपस्थितत्वात्। तथा भविष्योत्तरे--

नवरात्रोपवासेन यथाशक्त्या नृपोत्तम ! ।
मासे चाश्वयुजे शुक्लपक्षे फलमुदीर्यते ॥
एवं च विन्ध्यवासिन्यां नवरात्रमुपोषितः ।

इत्यादिवाक्यैर्नवरात्रे प्रकारचतुष्टयाऽऽम्नानाच्चतुर्विधत्वमिति। अत्रोच्यते नेदं चतुर्विधं किं तु नक्तव्रतमेव।

नक्तव्रतमिदं पार्थ ! सर्व्वपापप्रणाशनम् ।
सर्व्वकामप्रदं नृणां सर्व्वशत्रुनिबर्हणम् ॥
नवरात्राभिधं कर्म नक्तव्रतमिति श्रुतम् ।
धर्माऽर्थकाममोक्षार्थमनुष्ठेयं द्विजातिभिः ॥
आश्विने मासि मेघान्ते प्रतिपद्या तिथिर्भवेत् ।
तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं च पूजयेत् ॥
रात्रिरूपा यतो देवी दिवारूपो महेश्वरः ।
रात्रिव्रतमिदं देवि ! सर्व्वपापप्रणाशनम् ॥
सर्व्वकामप्रदं नृणां सर्व्वशत्रुनिबर्हणम् ।
रात्रिव्रतमिदं तस्य रात्रौ कर्त्तव्यतेष्यते ॥

नक्तव्रतमिदं यस्मादन्यथा नरके गतिः।
मासि चाश्वयुजे शुक्ले नवरात्रे विशेषतः॥
सम्पूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः।
आश्विने मासि मेघान्ते महिषासुरमर्द्दिनीम्॥
निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमात्।

इत्यादिनृसिंहप्रसादोदाहृतस्कान्दभविष्योत्तरभविष्य-कालिकापुराणदेवीपुराणादिवाक्यैर्नक्तव्रततत्वप्रतिपादनात्। किं च एकभक्तादिषु चतुर्ष्वपि विलक्षणकालव्यापिन्याय एव। तिथेरङ्गत्वात्। चतुर्विधे च तस्मिन्नेकभक्ताद्यन्यतमकालव्यापिन्यास्तिथेरुपादातुमशक्यत्वात्। प्रकारान्तरस्य चाश्रवणादङ्गीभूततिथेरुपादानमशक्यं स्यात्। न चैकभक्तादीनां "अयाची त्वथ वैकाशी" इत्यादिना वैकल्पिकानां मध्ये यदा येन नवरात्रं समापनीयम्, तदा तदुक्तकालव्यापिनी तिथिरुपादेयेति वाच्यम्।

अथ वा नवरात्रं च सप्तपञ्चत्रिकादि वा।
एकभक्तेन नक्तेनाऽयाचितोपोषितैः क्रमात्॥

इत्यादिना प्रतिपदादितिथिषु क्रमविहितैश्चतुर्भिरपि मिलितैर्नवरात्रसमापने तिथ्युपादानाऽसम्भवात्। न च प्रतिपदादितिथिषु क्रमेणैकभक्ताद्यनुष्ठाने विहिते एकभक्ताद्युक्तकालव्यापिन्यामेकेनैवैकभक्तादिकमनुष्ठेयमिति वाच्यम्। प्रतिपदादिक्रमेणैकभक्ताद्यनुष्ठाने तिथेर्ह्रासवृद्ध्यादौ तत्तत्कालव्यापित्वाऽसम्भवेन तदनुष्ठानाऽसम्भवात्। नन्वेतस्य नक्तव्रतत्वमनुपपन्नम्। तद्धि नक्तव्रतमित्युच्यते यत्र दिवाभोजनपरित्यागेन रात्रिभोजनं फलार्थं विधीयते। यथा हि वाराहपुराणे—

मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत्।
तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं च पूजयेत्॥

इत्यत्र व्याख्यातं माधवाचार्यैः। न च प्रकृते तथा। एकभक्तनक्ताऽयाचितोपवासानां चतुर्णां श्रूयमाणत्वात्। न च चतुष्टयमेककाले विधातुं शक्यते। तस्य विलक्षणस्यैव तत्तदङ्गत्वात्। न चैषां प्राधान्यम्। फलसम्बन्धाऽश्रवणात्। तस्मात्कथमस्य नक्तव्रतत्वमिति चेत् उच्यते—

प्रारभ्य नवरात्रं स्याद् दुर्गां पूज्य तु तत्र वै।

इत्याद्युत्पत्तिवाक्ये नवरात्रकालसम्बन्धेनोत्पन्ना पूजा, सैव च नवरात्ररूपकालसंयोगेन निमित्तेन नवरात्रशब्दाऽभिधेया । ततश्च

यावज्जीवं नरः स्त्री वा नवरात्रं महाव्रतम् ।
कुरुते चण्डिकाप्रीत्यै भुक्तिं मुक्तिं च विन्दति ॥

इत्यादिविनियोगविधिना नवरात्रशब्देनोपादाय सैव च भुक्त्यादिफले विनियुज्यते । तेनाऽत्र पूजैव प्रधानम् । यथा "दर्शपूर्णमासयोरिज्याप्राधान्यमविशेषात्" इत्यत्राऽमावास्यापौर्णमासीकालसंयोगेनोत्पन्नानामाग्नेयादीनां तत्कालसंयोगेनैव निमित्तेन दर्शपूर्णमासशब्दोपात्तानां फलसम्बन्धात्प्राधान्यमुक्तं, तद्वत्प्रकृतेऽपि । तथा च प्रधानभूतायाः पूजाया नक्तकाले विहितत्वान्नक्तव्रतत्वम् । एतस्य विधानं च रूपनारायणीयोदाहृतदेवीपुराणे—

आश्विने मासि मेघान्ते महिषासुरमर्द्दिनीम् ।
देवीं सम्पूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च ॥ इति ।

तथा तत्रैव—

मातॄणां चैव देवीनां पूजा कार्या तदा निशि । इति

कालिकापुराणेऽपि—

आश्विने मासि मेघान्ते प्रतिपद्या तिथिर्भवेत् ।
तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं च पूजयेत्॥इत्यादि।

तस्माद्यत्र प्रधानं च नक्तकाले विधीयते तदेव नक्तव्रतम् । न तु नक्तकालभोजनमात्रप्रयुक्तं नक्तव्रतत्वम् । येनोक्तदोषः स्यात् । एकभक्तनक्ताऽयाचितोपवासानां च फलिसंस्कारद्वारा वैकमङ्गत्वं तत्राऽपि "फलस्य कर्मनिष्पत्तेः, तेषां लोकवत्परिमाणतश्च फलविशेषः स्यात्" ( जै.सू. १–२–१–१७ ) इतिन्यायेन प्रधानोपकारतारतम्येन फलतारतम्यं कल्प्यम् । तेनैकभक्तादिचतुष्टयप्रतिपादकवाक्यानां नानर्थक्यविरोधादिकं शङ्क्यम् । तस्मान्नवरात्राभिधं कर्म नक्तव्रतमिति सिद्धम् । अत एव वचननिचयात् । माधवाचार्यैरपि 'तस्य नक्तव्रतत्वात्' इत्यनेन नक्तव्रतत्वं सिद्धान्तितम् । यत्तु नृसिंहप्रसादोदाहृतस्कान्दभविष्यादिवाक्यानां निर्मूलत्वे तत्र तत्राऽनुपलब्धिः, अनेकानिबन्धाऽपरिग्रहश्च हेतुरित्युक्तम् , तद्रूपनारायणीयादिसर्वदेशीयशिष्टपरिगृहीतनिबन्धेषु प्रत्यक्षपरिदृश्यमानानामपि वचनानां

करकङ्कणन्यायेनाऽप्रलापकौशलमायुष्मताम्। यत्पुनरेतेन तस्य नक्तव्रतत्वादिति वदन्माधवोऽपि प्रत्यादिष्ट इति, तदपि भ्रान्तप्रलपितमेवेत्युपेक्षणीयम्। यतो ऋङ्मात्रानभिज्ञैराधुनिकैश्चतुर्विंशतिशाखापारदृश्वनामार्याणां माधवाचार्याणामधिक्षेपः कलिकालप्राबल्यमाचष्टे।

तस्य चाश्विनशुक्लप्रतिपद्यारम्भः। तदुक्तं नारदीयपुराणे—

आश्विनस्य सिते पक्षे नवरात्रव्रतं शुभम्।
आदौ प्रतिपदं प्राप्य तिथिं चण्डीमनःप्रियाम्॥ इति

तथा रुद्रयामलेपि—

आश्विने मासि सम्प्राप्ते शुक्लपक्षे विधेस्तिथिम्।
प्रारभ्य नवरात्रं स्याद् दुर्गा पूज्या तु तत्र वै॥ इत्यादि।

एवं प्रतिपद्यारम्भे सिद्धे विचार्यते, कस्यां प्रतिपदि तदारम्भणीयमिति। तत्र हि प्रतिपद्द्विविधा। शुद्धा विद्धा च। तत्र शुद्धा तावत्सूर्योदयमारभ्य पुनः सूर्योदयपर्यन्तकालव्यापिनी। तदुक्तं नारदीये—

आदित्योदयवेलाया आरभ्य षष्टि नाडिकाः।
तिथिस्तु सा हि शुद्धा स्यात्सार्वातिथ्यो ह्ययं विधिः॥ इति।

विद्धा तु सूर्योपलक्षिते काले त्रिमुहूर्त्ततिथ्यन्तर-युक्ता साऽपि द्विविधा पूर्वोत्तरतिथियोगात् । तदाह पैठीनसिः—

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥ इति ।

तेनाऽयमर्थः——यदोदयोत्तरकालं पुर्वेद्युस्त्रिमुहूर्त्ता अ-मावास्या उपरिष्टात्सर्वाऽपि प्रतिपत्, तदा सा अमा-विद्धेत्युच्यते । यदा पुनः परेद्युरस्तमयात्प्राक् त्रिमुहू-र्त्तात् द्वितीया तदधस्ताच्च प्रतिपदेव सा द्वितीयावि-द्धेत्युच्यते । एवममाद्वितीयाविद्धयोर्दिनद्वयवर्त्तिन्योः प्र-तिपदोर्मध्ये कतरा ग्राह्येति, तत्र सामान्यविशेषाभ्यां निर्णयः । सामान्यतस्तावन्निगमवाक्येन

प्रतिपद्यप्यमावास्यातिथ्योर्युग्मं महाफलम् । इति ।

पैठीनसिस्कन्दव्यासा अप्याहुः——

प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ।
सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा ॥
प्रतिपत्सम्मुखी कार्या या भवेदापराह्णिकी ।

प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी ॥
दैवं कर्म तथा ज्ञेयं पित्र्यं च मनुरब्रवीत् ॥ इति ।

माधवीयेऽपि—

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥ इति ।

एतैर्वाक्यैः शुक्लप्रतिपन्मात्रस्याऽमावेधेऽपि पूज्यत्वं प्रतीयते । यत्त्वापस्तम्बभविष्योत्तराभ्यां—

प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता ।

इतिवचनेन सामान्यतः प्रतिपदो द्वितीयायुक्तत्वमुक्तं तत्कृष्णप्रतिपद्विषयमिति माधवाचार्याः । तिलकाऽशोककरवीरव्रतविषयम् । तेषां पूर्वाह्णे विधानात्, इत्यनन्तभट्टाः । सोऽयं सामान्यनिर्णयः ।

विशेषनिर्णयस्तु नृसिंहप्रसादे—

अमायुक्तैव कर्त्तव्या प्रतिपच्चण्डिकार्चने ।
न ग्राह्या परसंयुक्ता शुद्धा सन्तानकाङ्क्षिभिः ॥

लल्लसंहितायाम्—

द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने ।

मोहादथोपदेशाद्वा कृतं पुत्रविनाशकम् ॥
आरम्भे नवरात्रस्य द्वितीया त्रुटिसम्मिता ।
न केवलं तिथिं हन्ति वेधात्सा पुत्रसम्पदम् ॥

तथा——

द्वितीयादिकलोपेता प्रतिपच्चण्डिकार्च्चने ।
वर्ज्जनीया प्रयत्नेन विषलेशो यथाऽम्भसि ॥
यदि मोहात्प्रकुर्व्वीत ज्येष्ठपुत्रो विनश्यति ।

धवलनिबन्धेऽपि——

श्रीदेव्युवाच——

प्रतिपच्छेषसंयुक्तद्वितीयायां ममार्च्चनम् ।
कृतं धर्मं नाशयति सन्ततिं पुत्रपौत्रिकीम् ॥
अमायुक्तैव सा ग्राह्या प्रतिपच्चण्डिकार्च्चने ।
अन्यथाकरणे तावद्राज्यभङ्गः प्रजायते ॥

इत्यादिवाक्यैर्द्वितीयायुक्तप्रतिपन्निषेधात्, अमायुक्तप्रतिपदि देवीपूजाविधानाच्च सामान्यतो विशेषतोऽप्यमायुक्तप्रतिपद्येव नवरात्रारम्भ इति सिद्धम् । अत्र केचित् द्वितीयायुक्तप्रतिपदि तदारम्भमिच्छन्तो वा-

क्यान्युदाहरन्ति । तथा हि तत्र सामान्यतस्तावत्सौरपुराणे—

मासे सम्वत्सरे वाऽपि तिथिद्वैधं यदा भवेत् ।
तदोत्तरा तिथिर्ग्राह्या न पूर्व्वा तु मलिम्लुचा ॥ इति ।

भविष्यपुराणेपि—

यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुचः ।
तथा तिथिस्त्वहोरात्रा वृद्धेः प्रोक्ता मलिम्लुचा ॥
यथा मलिम्लुचः पूर्वो मासो देवस्तथोत्तरः ।
त्याज्या तिथिस्त्वहोवृद्धौ ग्राह्या चैवोत्तरा तिथिः ॥ इति ।

विशेषतस्तु—

तिथीनां प्रवरा यस्माद् ब्रह्मणा समुदाहृता ।
प्रतिपादिता यदा पूर्व्वं प्रतिपत्तेन सोच्यते ॥
तिस्रो ह्येताः पराः प्रोक्तास्तिथयः कुरुनन्दन ! ।
कार्त्तिक्याश्वयुजे मासि चैत्रे मासि च भारत ! ॥ इति ।

पराः=परयुताः । देवीपुराणेऽपि—

आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम् ।
सुस्नातस्तिलतैलेन पूर्व्वाह्णे पूजयेच्छिवाम् ॥ इति ।

अत्र पूर्वाह्णोपादानात्पूर्वाह्णव्यापित्वं निश्चीयते ।

तथा—

वर्ज्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव ! ।
द्वितीयादिगुणैर्युक्ता प्रतिपत्सर्व्वदा शुभा ॥ इति ।

मनुरपि—

यो मां प्रपूजयेन्नित्यं द्वितीयादिगुणान्विते ।
प्रतिपच्छारदि(?) ज्ञाता सोऽश्नुतेऽफलमव्ययम् ॥
यदि मोहात्प्रकुरुते प्रथमे स्थापनं मम ।
तस्य शापाऽयुतं दत्त्वा भस्मशेषं करोम्यहम् ॥
आग्रहात्कुरुते यश्च प्रथमे स्थापनं मम ।
तस्य सम्पद्विनाशः स्याज्ज्येष्ठः पुत्रो विनश्यति ॥

पुनरपि मनुरेव—

पूर्व्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी ।
नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता ॥

देवीपुराणेपि—

देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते ।
नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम् ॥

तस्माद्भद्रान्विता राजन् ! नवरात्रे प्रशस्यते।
आश्विने मासि मे भक्तैः कर्त्तव्या शुक्लपक्षजा॥
प्रतिपत्त्रिमुहूर्त्ता या पुत्रपौत्रप्रवर्द्धिनी।
धनवृद्धिकरी पुंसां सर्व्वसौख्यकरी तथा॥
अतोऽन्यथा न कर्त्तव्या नवरात्रव्रते मम। इत्यादि।

मार्कण्डेयोऽपि—

सुस्नातस्तिलतैलेन चापराह्णे महामुने !।
प्रतिपद्याश्विने मासि शुद्धे विद्धेऽथ भद्रया॥
एवं शुद्धे च विद्धे च भद्रया प्रतिपत्तिथौ।
भद्रकालीं स्तुवीतार्या श्रद्धाभक्तिसमन्वितः॥

इत्यादीनि तत्रेदमुत्तरम्—भवदुदाहृतेषु हेमाद्रि-माधवीय-चन्द्रिका-कल्पतरु-कालादर्श-निबन्धसर्व्वस्व-स्मृतिसङ्ग्रह-दुर्गोत्सव-भोजराजीय-रूपनारायणीय-निर्णयामृत-धर्मप्रदीपादिनिबन्धेष्वपि चिन्तामणि-वर्षप्रदीप-रत्नाकर-पारिजात-राजमार्त्तण्ड-प्रतापरुद्रीय-हरनाथ-सयप्रकाशादिष्वप्यदर्शनात्समूलत्वाऽनिश्चये कथमेषु विश्वासः। अस्तु वा समूलत्वं,

तथाऽपि नास्मत्सिद्धान्तविरोधिता । तथा हि न तावत्सौरभाविष्यपुराणीयवाक्यैरभीष्टसिद्धिरायुष्मताम् । तेषां तिथिमात्रद्वैधे उत्तरतिथिग्राह्यत्वप्रतिपादकानां सामान्यरूपत्वात् । निगमपैठीनसिस्कन्दव्यासादिवाक्यैः शुक्लप्रतिपन्मात्रस्यामायुक्तस्य ग्राह्यत्वप्रतिपादकैर्विशेषभूतैर्बाधितत्वेन शुक्लप्रतिपद्भिन्नतिथिपरत्वं तेषां वाच्यम्, सामान्यविशेषन्यायात्, तेन न विरोधः । आवश्यकश्चायमेतद्वाक्यसङ्कोचः श्रीमताम् । अन्यथा सर्वतिथीनामुत्तरविद्धानामेव ग्राह्यत्वप्रतिपादने तिथिविशेषे पूर्वविद्धाप्रतिपादकवाक्यानामानर्थक्ये कालनिर्णयमात्रोच्छेदप्रसङ्गात् । सम्भवति व्यवस्थापक्षे विकल्पानाश्रयाच्च । तेन न सामान्यवाक्यैर्द्वितीयायुक्तप्रतिपदो ग्राह्यत्वं सिद्ध्यति । अथ "तिथीनां प्रवरा यस्मात्" इत्यादिविशेषवाक्यैरेव तत्सिद्धिरिति, तत्रोच्यते—तदपि प्रतिपन्मात्रस्य परत्वप्रतिपादकम् । अमाविद्धप्रतिपद्ग्राह्यताप्रतिपादकवाक्यविरोधात् । आपस्तम्बीयवाक्यवदेव कृष्णप्रतिपद्विषयं वक्तुमुचितम् । न्यायसामान्यात् । अथ "आश्विनस्य सिते पक्षे" इत्यादिदेवीपुराणवाक्ये

"पूर्वाह्णे पूजयेच्छिवाम्" इतिपूर्वाह्णपदोपादानात्पूर्वाह्णव्यापित्वं प्रतिपदः सेत्स्यतीति वाच्यम्, तत्रोच्यते—अत्र प्रतिपच्छब्दः प्रतिपदादिनवतिथ्युपलक्षणार्थः । "प्राणभृत उपदधाति" इतिवत् "छत्रिणो गच्छन्ति" इतिवद्वा । अन्यथा एकस्यां तिथौ "प्रतिपत्सु" इतिबहुवचनस्य "यथाक्रमम्" इतिक्रमविधानस्य चाऽनुपपत्तेः । न च पाशबहुत्ववदेत्र बहुत्वाऽभिप्रायेण वहुवचनमिति वाच्यम् । क्रमविधानस्य तथाऽप्यनुपपत्तेः ।

तथा च प्रतिपदादितिथिषु

त्रिकालं पूजयेद्देवीं त्रिकालं शिवपूजकः ।

इत्यादिवाक्यविहितपूजास्वाद्यपूजाकालत्वेन पूर्वाह्णविधानान्न विरोधः । अन्यथा त्रिकालपूजाश्रवणात्त्रिकालव्यापिन्येव तिथिरङ्गं स्यान्न खण्डतिथिरिति प्रधानलोपप्रसङ्गः । किं चाऽस्य नक्तव्रतत्वप्रतिपादकेषु वाक्येषु नक्तं पूजाश्रवणान्नक्तकालव्यापिनी प्रतिपत्कुतो नेष्यते ? वस्तुतस्त्वस्मिन्वाक्ये तिलतैलस्नानाङ्गत्वेन पूर्वाह्णश्रवणान्न पूजाङ्गत्वाऽसिद्धिः । तथा च डाम-

स्कन्दे—

आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम्।
सुस्नातस्तिलतैलेन पूर्वाह्ने च नृपोत्तम! ॥
पुण्याहवाचनं कृत्वा द्विजांश्चैव प्रपूजयेत् ॥ इति।

यान्यपि—

वर्ज्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव!।

इत्यादीनि, अमायुक्तप्रतिपन्निषेधेन द्वितीयायुक्तप्रतिपद्विधायकानि वाक्यानि तान्यपि प्रतिपदो अमायोगाऽभावे द्वितीयायोगमात्रसत्त्वे द्वितीयायुक्तप्रतिपदोऽनुपादेयत्वशङ्कानिरसनद्वारा गौणकालविधानपराणि। प्रधानकालप्रत्यासत्तेः क्रमनियामकत्वादितिन्यायात्।

स्वकालादुत्तरः कालो गौणः सर्वैः प्रकीर्त्तितः।

इतिवचनाच्च। ततश्चाऽमायुक्तप्रतिपदभावे द्वितीयायुक्तायामपि प्रतिपदि तदारम्भ इति तेषामर्थः। यः पुनरमायोगनिषेधः, स विधेयस्तुत्यर्थः इति न क्वापि विरोधः। यद्वा—अमाविद्धप्रतिपन्निषेधोऽश्वपूजाविषयो वक्तव्यः।

कुहूकाष्ठोपसंयुक्तां वर्जयेत्प्रतिपत्तिथिम्।

राज्यनाशाय या प्रोक्ता निन्दिता साऽश्वपूजने ॥

इति निर्णयामृतोदाहृतकल्पतरुलिखितवचनात् । एवं चाऽमायुक्तप्रातिपद्ग्रहणे नवरात्राऽभिधस्य नक्तव्रतत्वात्

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

इत्यादिवाक्योपात्तोऽपि कालो लभ्यते । माधवाचार्यैर्द्वितीयाप्रकरणे कर्मकालव्याप्तिशास्त्रस्यैव शास्त्रान्तरेभ्यः प्राबल्याऽभिधानात् । दृष्टं च पार्वणादिषु ।

प्रतिपत्सम्मुखी कार्या या भवेदापराह्णिकी ।

इत्यादीनि त्वनुगुणान्येव भवन्ति । यत्तु "तस्य दैवकर्मत्वात् "पूर्वाह्णो वै देवानाम्" इत्यादिश्रुत्या च दैवे कर्मणि पूर्वाह्णविधानात् पूर्वाह्णव्यापिन्यां प्रतिपदि तदारम्भसिद्धिरिति, तदपि न ।

प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी ।

दैवं कर्म तथा ज्ञेयं पित्र्यं च मनुरब्रवीत् ।

इतिवचनेनाऽपराह्णव्यापिन्यामपि प्रतिपदि दैवकर्मविधानात् । न च स्मृतेः श्रुतिर्बलीयसीति वाच्यम् । तस्याः "तस्मादपराह्णे ददाति" इतिविधिशेषत्वेन स्वार्थाऽवि-

धायकत्वात् । तद्यथा "निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते" इत्यस्मिन्वाक्ये मनुष्यपितृसम्बन्धिनी निवीतप्राचीनावीते देवसम्बन्धेन विधीयमानस्योपवीतस्य स्तुत्यर्थमनुचितत्वेन निन्द्येते । तथा "पूर्वाह्णो वै देवाना मध्यन्दिनं मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददाति" इत्येतदपि पितृयज्ञार्थं विधीयमानस्याऽपराह्णस्य स्तुत्यर्थं देवमनुष्यसम्बन्धिनौ पूर्वाह्णमध्यन्दिनावनुचितत्वेन निन्द्येते इति । यदपि गौडनिबन्धेषु—

प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत् ॥

इति भविष्योत्तरीयं वाक्यं, तदपि सप्तम्यादितिथित्रयकर्त्तव्यपत्रिकापूजाविषयं वाच्यम् । न प्रतिपद्विषयम् ।

पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा
आरोग्यं धनदा करोति विजयं चण्डी प्रवेशे शुभा ॥
मध्याह्ने जनपीडनक्षयकरी सङ्ग्रामघोरावहा
सायाह्ने वधबन्धनादिकलहं सपक्षतं सर्वदा ॥

सप्तम्यामस्तगायां यदि विशति
गृहं पत्रिका श्रीफलाढ्या।
राज्ञः सप्ताङ्गराज्यं जनसुखम-
खिलं हन्ति मूलाऽनुरोधात् ॥
तस्मात्सूर्योदयस्थां नरपति-
शुभदां सप्तमीं प्राप्य देवीं
भूपालो वेशयेत्तां सकलज-
नहितां राक्षसर्क्षं विहाय ॥

इतिज्योतिषवाक्याऽनुरोधात्। यदपि नन्दिपुराणे—

शरत्काले महापूजा क्रियते यां च वार्षिकी।
सा कार्योदयगामिन्यां न तत्र तिथियुग्मता ॥

इत्यादि, तदपि सप्तमीपूजाविषयम्।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥

इतिदेवीपुराणे सप्तमीपदश्रवणात्। एवमन्यदपि व्यवस्थाप्यम्। यदपि चित्रावैधृतिपरिहारस्मरणं लोके, तन्मूलस्य पूर्वोदाहृतनिबन्धेष्वन्यतमेनाऽप्यनुदाहरणाद् भ्रममूलमित्येव गम्यते। सति तु तस्मिन्नेतावतामभियु-

क्तानामदर्शनस्य कल्पयितुमशक्यत्वात् । यदपि—

अश्वयुक्प्रतिपद्येव शुक्लायामपराह्णके ।
कलशस्थापनं कुर्याद्धित्वा चित्रां च वैधृतिम् ॥ इति ।

तथा—

त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्चने ।
तयोरन्ते विधातव्यं कलशारोपणं गृह ! ॥

इति वचनं, तदप्यश्वनीराजनाङ्गकलशस्थापनविषयं गम्यते ।

आरभ्य नवरात्रं स्यात्प्रतिपद्याश्विने सिते ।
वाजिनीराजनं पश्चाद्धित्वा चित्रां च वैधृतिम् ॥

इत्यश्वशास्त्रीयवचनैकमूलत्वात् । अत एव ब्रह्मपुराणे चित्रापरिहाराऽभिप्रायेणैव स्वातियोगेऽश्वपूजा विहिता । यथा—

अश्वयुक्शुक्लपक्षे तु स्वातियोगे शुभे दिने ।
पूर्व्वमुच्चैःश्रवा नाम प्रथमं सूर्यवाहनम् ॥
तस्मात्सोऽश्वचरैस्तत्र पूज्यो वै श्रद्धया सदा ।
पूजनीयाश्च तुरगा नवमीं यावदेव हि ॥ इति ।

तथा निर्णयशिरोमणावपि—

ततो नीराजनं कर्म प्रतिपद्याश्विने सिते।

प्रारभ्य नवरात्रं स्याद्धित्वा चित्रां च वैधृतिम्॥ इति।

न च—

त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्च्चने।

इतिवाक्येन चण्डिकार्चनेऽपि तयोः परिहार्यत्वमिति वाच्यम्। तस्य चण्डिकार्च्चने यद्यपि त्वाष्ट्रवैधृतियुक्ता प्रतिपत्तथाऽप्यश्वनीरजनाङ्गकलशस्थापनं तदन्त एव कार्यं इत्यर्थपरत्वात्। अस्य चार्थस्य चेच्छब्देनैव लाभात्। अन्यथा मूलान्तरकल्पनाक्लेशापत्तेः। एतेन सामान्यतश्चित्रावैधृतिपरिहारं वदन्नृसिंहप्रसादोऽपि तद्विषय एवेति गम्यते। विषयविशेषविवेचनं त्वाचार्यस्य वादिविवादरसेन विस्मृतम्। स्मृतमपि वाचादिवदनविवर्णतार्थमेव नोद्घाटितमिति न दोषः। यदा तु षष्टिदण्डा प्रतिपदहोरात्रं व्याप्नोति वर्द्धते तदाप्याद्याः षोडश द्वादश वा नाडीस्त्यक्त्वा पूजा कार्येत्युक्तं देवीपुराणे—

शुद्धे तिथौ प्रकर्त्तव्या प्रतिपच्चोर्ध्वगामिनी।

आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशाऽपि वा ॥
अपराह्णे च कर्त्तव्यं शुद्धसन्तानकाङ्क्षिभिः ॥ इति ।

तथा चित्रावैधृत्यादेरप्यहोरात्रव्यापित्वे षोडशैव नाडिकास्त्याज्या इत्याह मनुः—

चित्रावैधृतिसङ्क्रान्तौ प्रतिपच्च क्षयं गता ।
तदा पूर्व्वयुता कार्या त्यक्त्वा षोडश नाडिकाः ॥ इति ।

पूर्व्वयुता अमायुक्ता प्रतिपच्चित्रावैधृतिसङ्क्रान्तिभिः क्षयं योगं गता चेत् क्षयगामिनी वा तदा चित्रावैधृत्यादेः षोडश नाडिकास्त्यक्त्वा कार्येत्यर्थः । स एष चित्रावैधृतिपरिहारोऽश्वनीराजनाङ्कलशस्थापनविषय इत्युक्तं प्राक् । यत्त्वेवममायुक्तप्रतिपदि योऽयं नवरात्रोपक्रमो विहितस्तस्य सङ्कल्पः किं प्रातःकाले कार्य उत प्रतिपत्काले ? नाद्यः । अमायां प्रतिपदुपक्रमस्य नवरात्रस्य सङ्कल्पाऽयोगात् । अत एव बौधायनः—

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।
तिथिर्याऽभिमता सा तु कार्या नोपक्रमोज्झिता ॥ इति ।

उपक्रमातिथिश्च प्रातिपदेवेत्युक्तं प्राक् । नापरः ।

प्रातःकालस्यैव सङ्कल्पाऽङ्गत्वात् । उक्तं च—

प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् । इति ।

यथा—

प्रातरारभ्य मतिमान् कुर्यान्नक्तव्रतादिकम् ।

नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ स्मृतौ ॥ इति ।

उच्यते—प्रातरेव सङ्कल्पः कार्यः त्वदुक्तवचनात् । तदानीं ज्योतिःशास्त्रसिद्धप्रतिपदभावेऽपि स्मृत्युक्तप्रतिपदः सत्त्वात् । उक्तं च देवलेन—

यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।

सा तिथिः सकला ज्ञेया दानाऽध्ययनकर्म्मसु ॥ इति ।

एतदेवाऽभिप्रेत्योक्तं माधवाचार्यैः—

अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते । इति ।

तस्मात्प्रातरेव व्रतसङ्कल्पं विधायाऽपराह्णे कलशं संस्थाप्य नक्तकाले पूजेति युक्तमेव सिद्धम् । तदेवं प्रतिपदि प्रारभ्य नवमीपर्यन्तं नवरात्रव्रतं कुर्यात् । तदुक्तं धौम्येन—

आश्विने शुक्लपक्षे तु कर्तव्यं नवरात्रकम् ।

प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

विश्वरूपेऽपि जपहोमाद्यभिधायाऽत्राधिरुक्तः

शुक्लप्रतिपदारभ्य यावत्स्यान्नवमी तिथिः । इति ।

यत्तु प्रतापरुद्रीये कन्यकापूजनप्रक्रमे

प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत् ।

इत्यनेन दशम्यन्तत्वं प्रतीयते, तदपि पूर्णा अन्ते यस्याः स इत्यतद्गुणसंविज्ञानबहुव्रीहिणा पूर्णान्तशब्देन नवमीरूपस्तिथिविशेष एव गृहीतः । तथा च द्वितीयया तदभिव्याप्तावुक्ताया नवमीपर्यन्ततैव लभ्यत इति न विरोधः । यद्वा—पूर्णायामन्तो विसर्ज्जनं यथा भवति तथा पूजयेदित्यर्थो वक्तव्यः ।

दशम्यामभिषेकं च कृत्वा मूर्त्तिं विसर्ज्जयेत् ।

इत्यादिनैकवाक्यत्वात् । अन्यथा नवमीपर्यन्तताविधायकवाक्यविरोधो दशमीविसर्जनबोधकवाक्यैर्भिन्नमूलता चास्य दुर्वारा स्यात् । तस्मात्प्रतिपदमारभ्य नवमीपर्यन्तमेव व्रतमिति सिद्धम् । एवं च

आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव ।

इतिपूर्वोक्तं नवतिथिसम्बद्धव्रतगमकं लिङ्गमपि सङ्गच्छते । तदिदं नवरात्रव्रतं नित्यम् ।

एवं तु यजनं कुर्याद्वर्षे वर्षे नराधिप ! ।

इतिवीप्साश्रवणात् । "वसन्ते वसन्ते ज्योतिषा यजेत" इतिवत् । तथा कालिकापुराणे भगवद्वाक्यम्—

यो मोहादथ नास्तिक्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दम्भाद्वा द्वेषाद्वाऽप्यथ भैरव ! ॥
क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ।

तथा—

यो न पूजयते सम्यक् चण्डिका भक्तवत्सलाम् ।
भस्मीकृत्याऽस्य पुण्यानि निर्द्दहत्यवमानिता ॥

इत्याद्यकरणे प्रत्यवायश्रवणाच्च । तथा फलश्रवणाच्च काम्यम् । तथा हि देवीपुराणे—

शृणु शक्र ! प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
महासिद्धिप्रदं धन्यं सर्व्वशत्रुनिबर्हणम् ॥
सर्व्वलोकोपकारार्थं विशेषादासवृत्तिषु ।
कर्त्तव्यं ब्राह्मणाद्यैश्च क्षत्रियैर्ल्लोकपालकैः ॥
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ॥

महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।

कर्त्तव्यं देवराजेन्द्र! देवीभक्तिसमन्वितैः ॥ इति ।

तेनेदं नित्यकाम्यम् । नारदीये त्वाहत्यैव नित्य-काम्यता प्रतिपादिता—

यावज्जीवं नरः स्त्री वा नवरात्रं महाव्रतम् ।

कुरुते चण्डिकाप्रीत्यै भुक्तिं मुक्तिं च विन्दति ॥ इति ।

अत्र यावज्जीवश्रवणात्फलश्रवणाच्च नित्यकाम्यता । यत्तु तत्रैव—

नववर्षाणि यावच्च नारी स्नानपरायणा ।

दुर्गापूजादिकं कृत्वा किं व्रतान्ते समाचरेत् ॥

इतिशुद्धकाम्यवत्कालश्रवणं, तन्नित्यस्याऽप्यग्निहोत्रादेस्त्रिंशद्वर्षादिकालश्रवणवदशक्तस्य वैकल्पिककालान्तरविधानेनाऽविरुद्धमिति ।

तच्च द्विविधं शारदं वासन्तिकं च । तदुक्तम्—

शरत्काले महापूजा क्रियते या च वार्षिकी ।इति ।

वर्षादौ भवा वार्षिकीति व्युत्पत्त्या चैत्रशुक्लप्रतिपदादिषु क्रियमाणा लभ्यते । ये तु शरत्कालीनमहापूजाया एव चतुर्मासात्मकवर्षर्तुभवत्वाद्वार्षिकीति विशेषण-

माहुस्ते चाऽर्थेऽप्यव्युत्पन्ना उपेक्षणीयाः । किं च—

वासन्ते नवरात्रे तु पूज्या स्याद्रक्तदन्तिका ।

इत्यादिना रुद्रयामले स्पष्टतयैव भेद उपपादितः । तस्मात्सिद्धं द्वैविध्यम् ।

## अथाऽधिकारिनिर्णयः ॥

भविष्योत्तरे—

पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने ॥

शक्तिपरैश्चण्डिकापरायणैः ।

स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्विशैः ।
शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च भुवि मानवैः ॥
स्त्रीभिश्च कुरुशार्दूल ! तद्विधानमिदं श्रुणु ।

म्लेच्छैः शबर-किरात-पुलिन्दादिभिः ।

भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ।

इत्यमरोक्तेः । अन्यैरनुलोमप्रतिलोमजैः । देवीपुराणे ब्रह्मवाक्यम्—

शृणु शक्र ! प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
महासिद्धिप्रदं धन्यं सर्व्वशत्रुनिबर्हणम् ॥

सर्व्वलोकोपकारार्थं विशेषादस्रिवृत्तिभिः ।
कर्त्तव्यं ब्राह्मणाद्यैश्च क्षत्रियैर्लोकपालकैः ॥
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ॥
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।
कर्त्तव्यं देवराजेन्द्र ! देवीभक्तिसमन्वितैः ॥

## अथ पूजाकर्तृनियमाः ।

देवीपुराणे—

अयाची त्वथ वैकाशी नक्ताशी त्वथ वाय्वदः ।
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ॥
जपहोमसमासक्तः कन्यका भोजयेत्सदा ।

एकाशी=एकभक्ताशी । वाय्वदो वायुभक्षः । जितद्वन्द्वः=शीतोष्णक्षुत्पिपासादिद्वन्द्वदुःखेष्वनुद्विग्नः । शिवा दुर्गा तत्पूजकः । छान्दसः पुंवद्भावः ।

त्रिकालं पूजयेद्देवीं जपहोमपरायणः ।

इति तत्रैव श्रवणात् । यद्वा—शिवश्च शिवा च शिवौ तयोः पूजकः शिवपूजकः । इयं चाङ्गभूता त्रिकालपूजा । प्रधानभूता तु नक्तकाल एव । उक्तं चैतत्प्रा-

गेव । तथा कुलपूज्याऽपि देवी पूजनीया । तदुक्तं व्रतखण्डे—

यस्य यस्य हि या देवी कुलमार्गेण संस्थिता ।
तेन तेन च सा पूज्या बलिगन्धाऽनुलेपनैः ॥
नैवेद्यैर्विविधैश्चैव नवरात्रे समन्वितः ।
नानाविधैः सुकुसुमैः पूजयेत्कुलमातरम् ॥

तथा प्रत्यहं कुमारीभोजनं कार्यम् । तदुक्तं स्कान्दे—

एकैकां पूजयेत्कन्यामेकवृद्धां तथैव च ।
द्विगुणं त्रिगुणं वाऽपि प्रत्येकं नवकं तथा ॥
एकवर्षां तु या कन्या पूजार्थं तां विवर्ज्जयेत् ।
गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥
अरोगिणीं सुपुष्टाङ्गीं सुरूपां ब्रह्मवर्जिताम् ।
समानवंशसम्भूतां कन्यां सम्यक् प्रपूजयेत् ॥

वंशस्य समानत्वं पूजकवंशाऽपेक्षया । तेन ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया इत्यादि वक्ष्यते । कामनायां पुनर्विशेषस्तत्रैव——

ब्राह्मणीं सर्व्वकार्येषु जयार्थे नृपवंशजाम् ।
लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् ॥

दारुणे त्वन्त्यजातीनां पूजयेद्विधिना नरः ।
भोजयेत् श्वेतवस्त्रैश्च गन्धपुष्पाऽक्षतादिभिः ॥

वर्षविशेषेण कन्यानांमान्युक्तानि धौम्येन—

एकवर्षा भवेत्सान्ध्या द्विवर्षा च सरस्वती ।
त्रिवर्षा तु त्रिमूर्त्तिः स्याच्चतुर्वर्षा तु कालिका ॥
सुभगा पञ्चवर्षा स्यात्षड्वर्षा तु उमा भवेत् ।
सप्तभिर्मालिनी सा स्यादष्टवर्षा तु कुब्जिका ॥
नवभिः कालसंवर्षा दशभिश्चाऽपराजिता ।
एकादशेऽब्दे त्विन्द्राणी द्वादशेऽब्दे तु भैरवी ॥
त्रयोदशे महालक्ष्मीर्द्विसप्ताऽपीह मायिका ।
क्षेत्रजा पञ्चदशभिः षोडशे वर्चिका मता ॥
एवं क्रमेण पूज्या सा यावत्पुष्पं न विद्यते ।

तच्च कलशस्थापनपूर्व्वकं कार्यम् । तदुक्तं नारदीये—

ततस्त्वेकमना भूत्वा कृत्वा गोमयमण्डलम् ।
मृत्तिकास्थण्डिले स्थाप्य कलशं जलसम्भृतम् ॥
सपल्लवं सवस्त्रं च स्वर्णमुद्रासमन्वितम् ।
सपूर्णपात्रं निक्षिप्य दुर्गां तत्र तु विन्यसेत् ॥

यथोक्तेन विधानेन पूजयेद्भक्तिमान्नरः ।
यवगोधूमधान्यानि वापयेत्परितस्ततः ॥

तथा डामरकल्पे—

शरद्दताविषे मासि शुक्लपक्षे नृपोत्तम ! ।
प्रतिपत्तिथिमारभ्य नवचण्डीं समारभेत् ॥
कलशं सर्व्वरत्नाढ्यं हेमवस्त्रोदकान्वितम ।
सम्प्रतिष्ठाप्य सम्पूज्य चण्डिकार्चनमारभेत् ॥

तत्रैव यन्त्रोद्धारे—

शृणु राजन्प्रवक्ष्यामि चण्डिकायन्त्रमुत्तमम् ।
आश्विनस्य सिते पक्षे प्रतिपत्सु कथाक्रमम् ॥
सुस्नातस्तिलतैलेन पूर्व्वाह्णे च नृपोत्तम ! ।
पुण्याहवाचनं कृत्वा द्विजांश्चैव तु पूजयेत् ॥
ततश्च कारयेद्वेदिं सप्तधान्ययुतां नृप ! ।
स्थापयेत्पूर्णकलशं पञ्चरत्नसमन्वितम् ॥
वस्त्रे चारक्तके चैव सँल्लिखेद्यन्त्रमुत्तमम् ॥ इति ।

तथा तत्रैव नवचण्डीविधाने—

आश्विने प्रतिपन्मुख्याः पुण्याः स्युस्तिथयो नव ।
चण्डिकापूजने प्रोक्ताः सर्व्वकामफलप्रदाः ॥

स्नात्वा शुक्लतिलैस्तोये गङ्गायाः शुचिमानसः ।
गृहे वा देवतास्थाने कुर्यात्कुसुममण्डपम् ॥
वस्त्रैः परिवृतं सम्यक् नानावर्णैः सुशोभनैः ।
पूगैश्च नारिकेलैश्च जम्बीरैर्मातुलिङ्गकैः ॥
अन्यैश्च बहुपुष्पैश्च शोभितं फलसञ्चयैः ।
तत्र मध्ये मृदः कार्यमालवालं मनोरमम् ॥
निःक्षिपेत्तत्र धान्यानि ततः सिञ्चेज्जलैः शुभैः ।
तत्रोपरि न्यसेत्कुम्भं जलपूर्णं नवं शुभम् ॥
सुवर्णं निक्षिपेत्तत्र गन्धपुष्पैः समर्चयेत् ।
पुष्पमालावृतं कुर्यात्प्रतिष्ठामन्त्रमन्त्रितम् ॥
पुरस्तात्तस्य कुम्भस्य जपेत्सप्तशतीं बुधः ॥ इति ।

देवीपुराणेऽपि---

पूज्या मङ्गलकुम्भस्था देवी देवगणैर्युता ॥ इति ।

एतेन कलशस्थापनमाचारमात्रकममूलमिति स्वज्ञानस्यैवाऽमूलतामाह । तथा च तत्रैव ब्रह्मपूजनं कार्यम् । तदुक्तं महार्णवे--

पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखः स्थितः ।
संस्नातः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ॥

वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतः ।
ब्रह्मोपधाने कृत्वा तं ततः स्वस्त्ययनं पठेत् ॥
प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते ।

इत्यभिधाय "ब्रह्मजज्ञानम्" इति वा गायत्र्या वा पूजयेत् ।

उपाध्यायं च सम्पूज्य यथापाठं पठेत्ततः । इति ।

## अथ नवरात्रव्रतविधिः ।

नारदीयपुराणे—

अरुन्धत्युवाच—

व्रतं किंचित्समाख्यातं रूपसौभाग्यदायकम् ।
स्त्रीभिर्नृभिश्च यच्चाल्पं कृतं सर्वार्थसाधकम् ॥

वसिष्ठ उवाच—

शृणु चार्वङ्गि ! विमले शरत्काले उपस्थिते ।
आश्विनस्य सिते पक्षे नवरात्रव्रतं शुभम् ॥
आदौ प्रतिपदं प्राप्य तिथिं चण्डीमनःप्रियाम् ।
प्रातःस्नानं प्रकुर्वीत विधिना स्त्री नरोऽपि वा ॥

वापीकूपतडागे वा नदीनिर्झरणेषु च ।
गृहे वा शुद्धभावेन दुर्गां देवीं हृदि स्मरन् ॥
तिलाऽमलकचूर्णं तु मृत्तिकागोमयान्वितम् ।
कुङ्कुमाऽऽलोडितं कृत्वा तेनाङ्गान्यनुलेपयेत् ॥
स्नानं कृत्वा मन्त्रपूर्वं परिधाय तु वाससी ।
सूर्यायार्घ्यं ततो दद्यात्तत्र सञ्चिन्त्य चण्डिकाम् ॥
ताम्रपात्रे जलं कृत्वा कुङ्कुमाऽक्षतचन्दनम् ।
रूपसौभाग्यदा मह्यं तेन त्वं भव सर्वदा ॥

स्नानमन्त्रः—

ततस्त्वेकमना भूत्वा कृत्वा गोमयमण्डलम् ।
मृत्तिकास्थण्डिले स्थाप्य कलशं जलसम्भृतम् ॥
सपल्लवं सवस्त्रं च स्वर्णमुद्रासमान्वितम् ।
सपूर्णपात्रं निःक्षिप्य दुर्गां तत्र तु विन्यसेत् ॥
यथोक्तेन विधानेन पूजयेद्भक्तिमान्नरः ।
यवगोधूमधान्यानि वापयेत्परितस्ततः ॥
अखण्डं दीपकं देव्याः प्रीतये नवरात्रकम् ।
उज्वालयेदहोरात्रमेकचित्तो धृतव्रतः ।
नैवेद्यानि पृथक् कुर्यात्पायसादीनि नित्यशः ॥

वेदपारायणादीनि स्वशक्त्या कारयेद् व्रती ।
मार्क्कण्डेयपुराणं वा चण्डिकापाठमेव वा ॥
प्रत्यहं भोजयेद्विप्रान् कुमारीर्योगिनीरपि ।
तेभ्यो दद्याद्यथाशक्त्या स्रक्ताम्बूलफलादिकम् ॥
स्वयं नियमतः कुर्यान्नवरात्रमुपोषणम् ।
पयोव्रतफलाशित्वं नक्तभोजमयाचितम् ॥
एकभक्तं च सुभगे ! यथाशक्त्या समाचरेत् ।
हविष्यान्नं ब्रह्मचर्यं भूमिशय्या विशेषतः ॥
ब्रह्मपत्रेषु भोक्तव्यं रम्भापत्रे विशेषतः ।
न दिवा शयनं कार्यं न क्रोधद्रोहचिन्तनम् ॥
त्रिकालं पूजयेद्देवीं त्रिकालं स्नानमाचरेत् ।
उपवासस्य नियमं कृत्वा सर्व्वं समाचरेत् ॥
तस्यां पशुबलिं चित्रं यस्तु दद्यान्मनोहरम् ।
स लभेद्वाञ्छितान् कामान् नरो वा नार्यथाऽपि वा ॥
अजो वा महिषो वाऽपि मेषः कुपुरुषोऽपि वा ।
बलिदानेन दत्तेन देव्याः सद्भक्तिभावतः ॥
भवानीप्राङ्गणे प्राणा येषां यान्ति वरानने ! ।
तेषां स्वर्गे चिरं वासो घ्नतां पापं न विद्यते ॥

मेषाऽजमहिषादीनामलाभे पैष्टिकः पशुः ।
देयो देव्या विधानेन यद्वा कूष्माण्डकं फलम् ॥
तिलाज्यकुसुमादीनि पायसं मधुशर्करा: ।
हविर्द्रव्याणि जुहुयाद् दुर्गाष्टम्यां विशेषतः ॥
रात्रौ जागरणं कुर्याद् गीतवाद्यपुरःसरम् ।
ततः प्रभाते विमले प्रातः स्नात्वा यथाविधि ॥
दुर्गापूजां सुमहतीं कुर्यान्नानोपचारतः ।
कुमारीणां त्रयं भोज्यं नवकं वाऽथ शक्तितः ॥
कुङ्कुमाक्षतपुष्पादिवस्त्रालङ्कारभूषणम् ।
दद्याद्विप्राय विधिवद्देवीभक्ताय भामिनि ! ॥
मन्त्रहीनं क्रियाहीनं यन्मया कृतमत्र वै ।
तत्सर्वं चण्डिके ! दुर्गे ! पूर्णं भवतु मे सदा ॥
एवं सम्प्रार्थयेद्देवीं क्षमाप्य विधिवद् व्रती ।
दत्वा द्विजाय शुद्धाय श्रुतिस्मृतिविदे ततः ॥
स्वयं पारणकं कुर्यादिष्टबन्धुजनैः सह ।
अहःशेषं समासीत शिष्टैरिष्टैः शिवाप्रियैः ॥
यावज्जीवं नरः स्त्री वा नवरात्रं महाव्रतम् ।
कुरुते चण्डिकाप्रीत्यै भुक्तिमुक्तिमवाप्नुयात् ॥

रूपसौभाग्यभाग्यानां कथ्यते का कथा प्रिये ! ।
दिवि भुव्यन्तरिक्षे च दुर्गा देवीव मोदते ॥

अरुन्धत्युवाच—

नववर्षाणि यावच्च नारी स्नानपरायणा ।
दुर्गादेव्यादिकं पूज्य सा व्रतान्ते समाचरेत् ॥
तत्तेन येन सम्पूर्णव्रतं भवति भूतले ।
तद्वै त्वं भगवन् ब्रूहि वसिष्ठ ! मुनिसत्तम ! ॥

वसिष्ठ उवाच—

पूर्वोक्तविधिना सम्यक् दुर्गां स्थाप्य प्रपूजयेत् ।
तद्वद्विप्रान् कुमारीश्च गौरणीः(?) पूजयेच्छुभे ! ॥
भोजयित्वा यथाशक्त्या तेभ्यो दद्यात्फलादिकम् ।
नारिकेलफलादीनि नवकं नवकं प्रिये ! ॥
ताम्रमृन्मयपात्राणि सपर्यांसि तथैव च ।
वंशपात्राणि वस्त्राणि भक्ष्यभोज्याऽन्वितानि च ॥
यदि वा तिलपात्राणि मृत्पात्राण्यथ वा पुनः ।
अथ वा चाऽन्यपात्राणि पञ्चामृतभृतानि च ॥
सौभाग्यपात्राण्यथ वा कुङ्कुमादिभृतानि च ।
दुर्गा देवी प्रीयतां मे इत्युक्त्वा विधिवद्ददेत् ॥

दुर्गा देवी प्रसन्ना स्यात्तदन्ते व्रतपारणा ।
यावज्जीवं तु सुखिनी पतिपुत्रधनाऽन्विता ॥
पितृमातृसुखं भ्रातुः सा प्राप्नोति महीतले ।
मातुर्भवान्या भवने क्रीडने सुखिनी प्रिये ! ॥
इत्येतत्ते समाख्यातं नवरात्रव्रतं महत् ।
या कुर्याद् दुरिताऽऽपन्नयो मुच्यते नाऽत्र संशयः ॥

अथात्र कर्त्तव्यचण्डिकापाठप्रसङ्गेन शतचण्डीविधानमुच्यते । डामरकल्पे—

ऋषिरुवाच—

शतचण्डीविधानं हि यथावत्कथयाम्यहम् ।
सुघोरायामनावृष्ट्यां भूकम्पे च सुदारुणे ॥
परचक्रभये तीव्रे क्षयरोग उपस्थिते ।
राज्याऽवाप्त्यादिकार्येषु स्वायुष्मत्सुतजन्मनि ॥
महोपघातनाशाय पञ्चविंशतियोजने ।
देशे सर्वत्र शान्त्यर्थं शतचण्डीमिमां जपेत् ॥
शिवाभ्याशे शुभे देशे चतुर्द्वारं सुतोरणम् ।
पताकालङ्कृतं कुर्यान्मण्डपं वेदिभूषितम् ॥

तत्र कुण्डं प्रकर्त्तव्यमुक्तलक्षणसंयुतम् ।
सदाचाराः कुलीना ये ह्रीमन्तः सत्यवादिनः ॥
चण्डिकापाठसम्पूर्णा दयावन्तो जितेन्द्रियाः ।
ईदृग्लक्षणसंयुक्तान् दम्भमोहविवर्जितान् ॥
दश विप्रान् समभ्यर्च्य महालक्ष्मीस्वरूपिणः ।
मधुपर्कविधानेन यथावत्तद्ददाम्यहम् ॥
श्रीपर्णीवृक्षपीठानि हस्तमात्राणि मानतः ।
अष्टाङ्गुलसमुत्थान(?) सहितानि समानि च ॥
स्रुवः स्रुचा समायुक्तः खादिरो लक्षणान्वितः ।
सप्तविंशतिदर्भाणां विष्टरोऽग्रविभूषितः ॥
विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ।
सुखोष्णोदकसंयुक्ताः पाद्यार्थे ताम्रभाण्डिकाः ॥
शङ्खा अर्घ्यप्रदानाय गन्धपुष्पजलान्विताः ।
दूर्वोदकसमायुक्ताः स्थापनीयाः पृथक् पृथक् ॥
ताम्रपात्राणि च तथा जलपूर्णानि सर्वशः ।
मधुपर्कार्थकांस्यादिदधिमध्वादिपूरितम् ॥
महार्हाणिं च वस्त्राणि मुद्रिका भूषणानि च ।
मयूरपत्रच्छत्राणि सोष्णीषाणि समाहरेत् ॥

पादुका आहरेत्तत्र ताम्रभूषणभूषिताः ।
अन्यत्स्मार्त्तं तदप्युक्तं मधुपर्कस्य पूजने ॥
शतचण्डीमखे कृत्वा प्रयत्नेन समाहरेत् ।
स्मार्त्तेन विधिना पूर्वं मधुपर्केण पूजनम् ॥
कृत्वा फलमवाप्नोति महायज्ञार्हणोपमम् ।
अन्येभ्यो मधुपर्कस्य विप्रेभ्यो यत्प्रपूजनम् ॥
तस्माद् द्विगुणितं दद्यादाचार्याय तु पूजनम् ।
अर्चितास्ते द्विजश्रेष्ठाः सन्तुष्टाः पूर्णमानसाः ॥
यजमानं सपत्नीकं सुतबन्धुसमन्वितम् ।
उपविश्यासने पुण्ये कुशाग्रैरुपभूषिते ॥
वेदमन्त्राक्षतैः पूर्णं कुर्युस्ते स्वस्तिवाचनम् ।
कृतस्वस्त्ययने विप्रैर्वेदवादित्रनिःस्वनैः ॥
चण्डिकामण्डपं यावत्परिवारविभूषितः ।
पश्चिमद्वारमार्गेण प्रविश्य क्रतुमण्डपम् ॥
ददाति पूजनेऽनुज्ञां देशिकस्य कृताञ्जलिः ।
देशिकः सर्वमन्त्रज्ञो नवभिर्ब्राह्मणैः सह ॥
नवग्रहांश्च दिग्देवीर्लोकपालसमन्वितान् ।
दिशापालांश्च सम्पूज्य कलशस्थांश्च पूज्य च ॥

मण्डपस्य चतुर्दिक्षु दत्त्वा भूतबलिं बहिः ।
मण्डपे कलशौ द्वौ द्वौ द्वारि द्वारि निवेशयेत् ॥
गङ्गादितोयसम्पूर्णावाम्रपल्लवशोभितौ ।
उपस्पृश्योदकं ध्यात्वा चण्डिकां देववन्दिताम् ॥
उपविश्यासने वेद्यां बद्ध्वा पद्मासनं दृढम् ।
प्राणायामविशुद्धात्मा देशिकः शुभलक्षणः ॥
चण्डिकापूजनं कुर्याद्विशेषेण समन्वितम् ।
कस्तूरीकुङ्कुमोपेतं सकर्पूरं सुचन्दनम् ॥
पलद्वयमितं सर्वमनुलेपनमाहरेत् ।
दिव्यवस्त्रमलङ्कारं हैमगद्याणकत्रयम् ॥
लक्षपुष्पचतुर्थांशं गुग्गुलुं च पलद्वयम् ।
दीपानां विंशतिः श्रेष्ठा मण्डपे जपसाधनम् ॥
कुडवौ द्वौ हविष्यान्नं नैवेद्यं नरसंशुचि(?) ।
ताम्बूलानां सकर्पूरं शतद्वयमनुत्तमम् ॥
नवचण्डीविधानोक्तं महालक्ष्मीप्रपूजनम् ।
नवभिर्ब्राह्मणैः सार्द्धं कृत्वाऽऽचार्यो द्विजोत्तमः ॥
ददाति नवविप्रेभ्यो आचार्यश्चण्डिकामयः ।
कार्यजाप्यप्रसिध्यर्थमनुज्ञां मानपूर्वकम् ॥

ततोऽनुज्ञामनुप्राप्य वेद्यामाचार्यसन्निधौ ।
मृद्वासनेषु सन्तुष्टा उपविष्टाः सुनिश्चिताः ॥
नासाध्यानसमायुक्ता नासाग्रस्याऽवलोकिनः ।
सुगन्धपुष्पमालाढ्याश्चण्डिकाचरितत्रयम् ॥
सरहस्यमृषिच्छंदोदेवताशक्तिसंयुतम् ।
बीजतत्त्वसमोपेतमुपांशुगणसंयुतम् ॥
जपेयू रूपमेकैकं मौनिनस्त्यक्तमत्सराः ।
समुत्थाय ततः कुर्युरेकैकं ते प्रदक्षिणम् ॥
चण्डिकां तु नमस्कारैः परितोष्य पुनः पुनः ।
उपविश्यासने सूक्तैः श्लोकैः सर्वार्थसाधनैः ॥
प्रार्थयेयुः प्रार्थ्यफलं महालक्ष्मीं दृढव्रताः ।
कुमार्यो दशसङ्ख्याका भोज्या विप्रा दशोत्तमाः ॥
महाकालीमहालक्ष्मीसरस्वत्या जपं जपन् ।
भोजयेत्परया भक्त्या देशिकादिदशद्विजान् ॥
ततो बन्धुसमायुक्तो भुञ्जीयाद्यज्ञकृत्पुमान् ।
सत्कथाभिः सुगीतैश्च सर्ववादित्रनिःस्वनैः ॥
पूजनैः प्रेक्षणैश्चैव वेदपाठैर्निशां नयेत् ।
द्वितीये दिवसे स्नात्वा विधिवत्ते द्विजा दश ॥

चण्डिकातर्पणं कुर्युः सम्पूर्णध्यानपूर्वकम् ।
सर्वं पृथक् पृथक् कृत्वा दिग्देवीपूजनादिकम् ॥
बहिर्भूतबलिं दत्त्वा कृत्वा देव्याः प्रदक्षिणम् ।
पुष्पागारे महारम्ये स्वस्वमासनमास्थिताः ।
जपन्ति जयचण्डीति यावद् दुर्गाप्रपूजनम् ॥
पूर्वस्मात्पूजनात्कुर्याद् द्विगुणं पूजनं क्रमात् ।
आचार्यः सुस्थितः शान्तश्चाण्डिकायाश्च तोषणम् ॥
कृते तु पूजने विप्रा जपेयुर्द्विगुणं जपम् ।
द्विगुणं च प्रकर्त्तव्यं कुमारीद्विजभोजनम् ॥
कार्यश्च जागरो रात्रावुक्तैः सर्वैर्महोत्सवः ।
चण्डिकापूजनं जाप्यं कुमारीद्विजपूजनम् ॥
तृतीयेऽहनि कर्त्तव्यं त्रिगुणं च सजागरम् ।
चतुर्थे दिवसे सर्वं सम्यक्कार्यं चतुर्गुणम् ॥
महाजागरणोपेतं होमः स्यात्पञ्चमेऽहनि ।
पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् ॥
जुहुयादुक्तविधिना दशांशेन नृपोत्तम ! ।
रुद्राध्याये यथा होमो मन्त्रेणैकेन साध्यते ॥

चण्डीसप्तशतीजाप्ये होममन्त्रो नवाक्षरः ।
कथितः पूजनाध्याये तेन होमो भवेदिह ॥
नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥
अथवाऽयं भवेद्धोमः श्लोकैः स्तोत्रनिरूपितैः ।
जपहोमे सुसम्पूर्णे दिग्देवीनां शतं शतम् ॥
होतव्यं नाममन्त्रैश्च हविषे तेन सादरम् ।
शतं शतं क्रमाद्देयमाज्यं चरुसमित्तिलान् ॥
ग्रहेभ्यो वैदिकैर्मन्त्रैः फलं पुष्पं शतं शतम् ।
लोकपालान् दिशापालान् होमे सर्पिश्चरुस्तिलान् ॥
आचार्यादिद्विजाः सर्वे जुहुयुश्च शतं शतम् ।
होमे सम्पूर्णतां प्राप्ते नमस्कृत्वेष्टदेवताम् ॥
चण्डिकां देवदेवानामृषीणां वन्दितां पराम् ।
स्तम्भद्वये श्रुतं कृत्वा यजमानः स्वलङ्कृतः ॥
घृतकुम्भदशांशेन दद्यात्पूर्णाहुतिं स्वयम् ।
मूर्द्धानंमन्त्रपाठेन नवाक्षरमथापिवा ॥
प्राशनं मार्जनाद्यं च नवदुर्गाविधानवत् ।
जपं हुतं समावेद्य चण्डिकायै मनोरथान् ॥

ब्रह्मणे निष्कषट्कं तु दद्याद् गोमिथुनद्वयम् ।
अस्याः प्रभावमतुलंश्लोकमुक्त्वा कृताञ्जलिः ॥
दद्याद्गोमिथुनान्यष्टावाचार्यं तु भक्तिमान् ।
चतुर्विंशतिसङ्ख्याकैर्हैमगद्याणकैः सह ॥
एकैकमष्टविप्रेभ्यो दद्याद् गोमिथुनं समम् ।
निष्कत्रयसमायुक्तं वस्त्रालङ्कारभूषितम् ॥
सुस्थितं स्वासने शान्तं यजमानं महोत्सवम् ।
कुङ्कुमाक्ताक्षता दूर्वाः सुगन्धं चन्दनं दधि ॥
आदायादयते विप्र(?) आचार्यश्च सुपूजितः ।
स्तोत्राणां तु चतुर्णां तु महालक्ष्मीपरायणः ॥
एकैकं श्लोकमुच्चार्य दद्युराशिषमुत्तमम् ।
सभार्यः ससुतः पूर्णो लब्ध्वाऽऽशीर्वादमङ्गलम् ॥
रत्नपुष्पाञ्जलिं दद्याच्चण्डिकाया विसर्जनम् ।
भूरिदानं ततो दद्युः पुण्यवादित्रनिःस्वनैः ॥
प्रविशेच्छान्तिपाठैश्च तोरणाढ्यं स्वमालयम् ।
शतचण्डीविधानस्य कृतेन सुकृतेन हि ॥
महालक्ष्मीर्ददात्यस्मै त्रैलोक्यसुखमुत्तमम् ॥

यद्यत्कार्यं समुद्दिश्य क्रियते शतचण्डिका ।
तत्तत्तस्य महालक्ष्मीः सत्यमाशु प्रयच्छति ॥

इति डामरकल्पे शतचण्डीविधानम् ।

अथ शतचण्डीविधानाऽशक्तेन दिनवृद्ध्या स्तोत्रपाठः कार्यः । तदुक्तं डामरकल्पे—

आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव ।
चण्डिकापूजने प्रोक्ताः सर्वकामफलप्रदाः ॥
स्नात्वा शुक्लतिलैस्तोये गङ्गायाः शुचिमानसः ।
गृहे वा देवतास्थाने कुर्यात्कुसुममण्डपम् ॥

इत्यादिना कलशस्थापनादिदेवीपूजनान्तमुक्त्वा स्तोत्रपाठकाले—

एकमेकोत्तरावृद्ध्या रूपाणि परिकीर्त्तयेत् ।
तथैव कन्यकाविप्रहयानां वृद्धिरुत्तमा ॥

रात्रौ जागरणं कुर्याद् गीतवादित्रनिःस्वनैः ।
इत्यभिधाय होमविसर्जनाद्यभिहितम् ।

अथ वा भवानीसहस्रनामस्तोत्रं पठनीयम् ।

तदुक्तं तत्रैव फलश्रुतौ—

नवरात्रेष्वनाहारो दृढबुद्धिर्जितेन्द्रियः ।
चण्डिकायतने विद्वान् शुचिष्मान्मूर्त्तिसन्निधौ ॥
एकाकी तु शतावर्त्तं पठन् धीरश्च निर्भयः ।
साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम् ॥
सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ।
पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता ॥
दशावर्त्तं पठन्नित्यं भूमिशायी नरः शुचिः ।
स्वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति ॥

आवर्त्तनसहस्रैर्ये पठन्ति पुरुषोत्तमाः ।
ते सिद्धाः सिद्धिदा लोके शापाऽनुग्रहणे क्षमाः ॥ इत्यादि ।
अथाऽशक्तस्य प्रकारान्तरम् । तत्र धौम्यः—

अथ वा नवरात्रं च सप्तपञ्चत्रिकादि वा ।
एकभक्तेन नक्तेनाऽयाचितोपोषितैः क्रमात् ॥ इति ।

आदिशब्देन द्विरात्रैकरात्रे गृह्येते । तदुक्तं भविष्ये—

त्रिरात्रेण द्विरात्रेण एकरात्रेण वा पुनः । इति ।

पञ्चरात्रपक्षे पञ्चम्यामारम्भः ।

एकभक्तस्तु पञ्चम्या षष्ठ्यां नक्तं प्रवर्त्तयेत् ।
अयाचितस्तु सप्तम्यामष्टम्यां तु उपोषितः ॥

नवम्यां च पारणम् । इत्येवं पञ्चरात्रम् । त्रिरात्रपक्षे सप्तम्यामारम्भः ।

त्रिरात्रं वाऽपि कर्त्तव्यं सप्तम्यादिदिनत्रयम् ।

इति तत्रैवाऽभिधानात् । द्विरात्रमपि भविष्ये—

अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाऽऽश्विने मासि विशोको जायते नरः ॥

एकरात्रं त्वष्टमीमात्रोपोषणम् ।

कन्यासंस्थे रवावीशशुक्लाष्टम्यां प्रपूजयेत् ।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः ॥

इतिवाक्यात् । केचित्तु एकरात्रं नवम्युपोषणमाहुः ।

यः करोत्युपवासं तु नवम्यां विधिवन्नृप ! ।
स फलं प्राप्नुयात्सर्वं राजसूयाऽश्वमेधयोः ॥

इतिवचनादिति तन्न । तस्य फलश्रवणेन काम्यतया नवरात्रबहिर्भावस्य वक्ष्यमाणत्वात् ।

## अथ सप्तम्यादिपूजाविधानम् ।

राजमार्त्तण्डे—

सप्तम्यां मूलयोगे प्रथमचरणगे पत्रिका पूजनीया
चाष्टम्यां रात्रियोगे कृतनियमविधेर्यज्ञकर्म प्रदिष्टम् ॥
नानाजातेः पशोर्वा हृतिरपि नवमीरौद्रयोगे प्रदिष्टा
सा पत्री वैष्णवान्ते कृतविहितविधिः प्रेषयेत्तां दशम्याम् ॥

तथा—

मूलं प्राप्य प्रथमचरणेऽभ्यर्चनं चण्डिकायाः
कृत्वाऽष्टम्यामशनरहितस्त्यक्तनिद्रश्च पूजाम् ॥
प्रातःकाले पशुबलिविधिस्नानदानं दशम्यां
निर्माल्यं तु श्रवणदशमीवासरान्ते विजह्यात् ॥

कात्यायनः—

मूलेन प्रतिपूजयेद्भगवतीं चण्डीं प्रचण्डाऽऽकृतिं
चाष्टम्यामुपवाससङ्गततया भक्त्या समाराधयेत् ॥
नानापाशवमज्जमांसरुधिरैः कृत्वा नवम्यां बलिं
युक्ता च श्रवणेन तां च दशमीं सम्प्राप्य सम्प्रेषयेत् ॥

ज्योतिःशास्त्रे—

ऋक्षत्रये च मूलादौ सप्तम्यामाश्विने सिते ।
चण्डिकामुपहारैश्च पूजयेद्राष्ट्रवृद्धये ॥
कुर्याज्जागरमष्टम्यां नवम्यां विधिवद्बलिम् ।
दशम्यां बलवृध्यर्थं कुर्यान्नीराजनं नृपः ॥
मूलेनाऽऽवाहयेद्देवीं पूर्वेण प्रतिपूजयेत् ।
उत्तरेणाऽर्चनं कृत्वा श्रवणेन विसर्जयेत् ॥

अत्र तिथिनक्षत्रयोगो मुख्यः कल्पः । वियोगे तु तिथिरेव मुख्या ।

तिथिः शरीरं तिथिरेव कारणं
तिथिः प्रधानं तिथिरेव साधनम् ।
नक्षत्रयोगादिषु सैव मुख्या
ग्राह्या न लभ्येत यदा हि ऋक्षम् ॥

इतिज्योतिर्गर्गवचनादिति रूपनारायणो मन्यते । मध्यदेशीयसमाचारस्तु नक्षत्रयोगमादायैव जागर्त्ति । तन्मूलमन्वेषणीयम् । धवलनिबन्धे—

मूलेनाऽऽगमनं देव्यः पूर्वाषाढासु पूजनम् ।
उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत् ॥ इति ।

## अथाऽष्टमी निर्णीयते ।

तत्र सामान्यतस्तावत् "वसुरन्ध्रयोः" इतियुग्मवाक्येन

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥

इति वाक्येन, तथैव—

एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूज्याः परेण संयुक्ताः पराः पूर्वेण संयुताः ॥

इतिशङ्करगीतावाक्येन चैकवाक्यतापन्नेन नवमीयुक्ताऽष्टमी ग्राह्येति सिद्धम् । एवमन्यान्यपि ।

सप्तमी नाऽष्टमीयुक्ता न सप्तम्याऽष्टमी युता ।
सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा ॥

इत्यादीनि ब्रह्मवैवर्त्तपाद्मस्कान्दादिसामान्यवाक्यानि पूर्वन्यायेन विशेषे व्यवस्थापनीयानीतिविस्तरभयान्नेहोदाहृतानि । तमेतं निर्णयं रूपनारायणोऽप्यनुमेने । वचनं च विष्णुधर्मोत्तरे—

अष्टम्या नवमी युक्ता नवम्या चाऽष्टमी युता ।
अर्द्धनारीश्वरप्राया उमाहेश्वरी तिथिः ॥ इत्यादि ।

भोजराजोऽपि—

अष्टम्यां पूज्यते रुद्रो नवम्यां शक्तिरर्च्यते ।

उमाया नवमी प्रोक्ता हरस्य तिथिरष्टमी ॥

द्वयोर्योगे महापुण्या उमामाहेश्वरी स्मृता । इति ।

तदेवं नवमीयुक्तैवाऽष्टमी ग्राह्येति सिद्धम् । अत एव सप्तमीविद्धाऽष्टमीनिषेधोऽपि श्रूयते—

सप्तम्या चाऽष्टमी विद्धा न कर्त्तव्या शिखिध्वज ! । इति ।

भोजराजेनाऽपि सप्तमीवेधाभावो नवमीविद्धाऽष्टमीग्रहणे हेतुरुक्तः ।

न दिवा न निशाऽपि च विष्टिहता

न च सप्तमीशल्यसमोपहता ॥

यदि चाष्टमीशेषभवाऽनवमी

अमरैरपि पूज्यतमा नवमी ॥ इति ।

अस्यार्थः—

अष्टम्या उपरि यदि नवमी लभ्यते तदा साऽष्टमी अनवमी सर्वोत्कृष्टा अमरैरप्यतिशयेन पूज्या । तत्रैव हेतुमाह यतो दिवा निशाऽपि विष्टिहता न, सप्तमीशल्योपहताऽपि नेति । अतो दोषद्वयवतीं पूर्वाऽष्टमीं परि-

त्यज्योत्तरैव तच्छून्योपादेयेति । एवं हेतुमुक्त्वा तन्मूलमाह—

पुत्रान् हन्ति पशून् हन्ति हन्ति राष्ट्रं सराजकम् ।
हन्ति जातानजातांश्च सप्तमीसहिताऽष्टमी ॥
तस्मात्सर्वप्रयत्नेन सप्तमीवेधसंयुता ।
वर्जनीयाऽष्टमी पार्थ ! पुत्रो राज्यमभीप्सुभिः ॥इति।

दिवोदासस्तु विशेषवचनबलादेवेतमर्थमुपोद्बलयति स्म । यथा—

जम्भेन सप्तमीयुक्ता पूजिता सा महाऽष्टमी ।
इन्द्रेण निहतो जम्भस्तेन दानवपुङ्गवः ॥
तस्मात्सर्वप्रयत्नेन सप्तमीमिश्रिताऽष्टमी ।
वर्जनीया हि मनुजैरात्मनः शुभकाङ्क्षिभिः ॥
सप्तमीशल्यसंयुक्तां मोहादज्ञानतोऽपि वा ।
महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते ॥ इति ।

महाष्टमीत्वं चास्याः कालिकापुराणे प्रतिपादितम्—

आश्विनस्य तु शुक्लस्य या भवेदष्टमीतिथिः ।
महाऽष्टमीति सा प्रोक्ता देव्याः प्रीतिकरी परा ॥

ततस्तु नवमी या स्यात्सा महानवमी स्मृता ।
सा तिथिः सर्वलोकानां पूजनीया शिवाप्रिया॥इति।

नक्षत्रयोगपुरस्कारेण तु महाऽष्टमीत्वं धौम्येनोक्तम्-

आश्विने मासि शुक्ले तु या स्यान्मूलेन चाष्टमी ।
सा महत्यष्टमी ज्ञेया तत्र देवावृतालया ॥

ब्रह्माण्डपुराणेऽपि—

कन्यां समाश्रिते भानौ या स्यान्मूलेन चाष्टमी ।
सा महत्यष्टमी ज्ञेया न युधानवमीयुता ॥

मूलयोगस्तु सम्भवाऽभिप्रायः । तेन पूर्वाषाढायुताऽपि महाष्टमी भवति ।

मूलऋक्षसमायुक्ता पूजनीया प्रयत्नतः ।
मूलाऽभावेऽपि कर्त्तव्या यदि स्यात्तोयसंयुता ॥

इतिवचनात् । अस्या एव नक्षत्रद्वयाऽन्यतरयोगे महानवमीत्यपि संज्ञान्तरम् । तदुक्तं नृसिंहप्रसादे—

आश्वयुक्शुक्लपक्षे तु अष्टमी मूलसंयुता ।
पूर्वयाऽषाढया सार्द्धमृक्षद्वययुताऽथ वा ॥
सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा ॥इति।

तथा—

कन्यागते सवितरि शुक्लपक्षेऽष्टमी तु या ।

मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥ इति ।

एतेन "अष्टमी मूलसंयुता" इत्येकं पदमध्याहृतस्य नवमीत्यस्य पदस्य विशेषणमिति निरस्तम् । यदप्युत्तराषाढा निषिद्धा रूपनारायणेन—

मूलेन पूजयेद्देवीं तथा सलिलदैवते ।

वैश्वदेवे तु नक्षत्रे पूजिता दुःखदा भवेत् ॥ इति ।

ब्रह्माण्डपुराणेऽपि—

धनुःसंस्थे निशानाथे पूजयेदम्बिकां बुधः ।

नैर्ऋते चाम्बुदैवत्ये न विश्वर्क्षे कथञ्चन ॥ इति ।

तदपि सम्भवति मूलादौ न तत्रेति तात्पर्येण । अन्यथा "उत्तरासु बलिं दद्यात्" इति विरुध्येत । तस्मान्नवमीमिश्रितैवाऽष्टमी देवीपूजायां ग्राह्येति बहुतरनिबन्धस्वरसः । अत्रार्थे विप्रतिपन्ना विश्वरूपाचार्या ह्यन्यथैव वाक्यान्युदाजह्रुः । यथा—

महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी ।

सप्तम्याऽपि युता कार्या मूलेन तु विशेषतः ॥

महाष्टम्यां भगवती भद्रायामपि पूजिता ।
ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी ॥
यदाष्टमीं च सम्प्राप्य अस्तं याति दिवाकरः ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥
कुलं पुत्रं धनं राज्यं दीर्घमायुस्तथैव च ।
प्रथमा चाष्टमी पूज्या ये काङ्क्षन्ति सदा सुखम् ॥
आश्वयुज्यष्टमी यत्र पूज्या नवमीमिश्रिता ।
दुर्भिक्षं तत्र जानीयाद्दश वर्षाणि पञ्च च ॥
देवीं निवेशयेद्यत्र नवम्यां तु नराधिप ! ।
राज्यपीडा भवेत्तत्र कुलप्राणापहारिणी ॥
दशम्यां दीयते यत्र बलिदानं च मानवैः ।
तद्राष्ट्रं नाशमायाति दुर्भिक्षोपद्रवैः स्फुटम् ॥

इत्यादिवसिष्ठप्रणीतानि । तथाऽन्यत्रापि——

अश्वयुक्शुक्लपक्षे तु अष्टमीमूलसंयुता ।
यदि स्याद्रविविद्धाऽपि सा महानवमी स्मृता ॥

चैत्राऽष्टमी माघसिताष्टमी च
दूर्वाष्टमी चाऽऽश्विनजाऽष्टमी च ॥

एताश्चतस्रः प्रथमेऽह्नि कुर्या-
द्वैशाखमासस्य च या तृतीया ॥
सप्तम्यामुदितः सूर्यो अष्टम्यस्तमितो यदि ।
मूलऋक्षसमायुक्ता पूजनीया प्रयत्नतः ॥

औवेंऽपि--

महाष्टम्यां भगवती भद्रायामपि पूजिता ।
ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी ॥
विष्टिं त्यक्त्वा महाष्टम्यां मम पूजां करोति यः ।
तस्य पूजां न गृह्णामि तेनाहमवमानिता ॥

भविष्योत्तरेऽपि--

अहं भद्रा च भद्राऽहं नावयोरन्तरं क्वचित् ।
एवं सिद्धिं प्रदास्यामि भद्रायामर्चिताऽप्यहम् ॥
भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया ।
तस्माद्वै सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः ॥

इत्यादिविशेषवाक्यैर्युग्मादिसामान्यवचनबाधान्महाष्टमी सप्तमीविद्धैव ग्राह्येति । एवं वचनविरोधेन भोजराजादिभिर्विश्वरूपादीनां विप्रतिपत्तावित्थं व्यवस्था । यत्र पूर्वदिने षड्दण्डा सप्तमी, उपरिष्टाच्चाऽष्टमी ।

द्वितीयदिने च क्षयवशादष्टमी नास्त्येव। किं तु नवम्येव सर्वा। तत्र सप्तमीविद्धाऽष्टमीपरिहारेऽष्टमीकृत्यमात्रलोपप्रसङ्गः। तन्निराकरणार्थं सप्तमीविधायकानि वाक्यानि प्रवृत्तानि। तदुक्तं नृसिंहप्रसादे—

सूर्योदये यदा न स्यान्नवमी चाऽपरेऽहनि।
तदाऽष्टमीं प्रकुर्वीत सप्तमीसहितां नृप!॥ इति।
उत्तरास्तिथयो यत्र क्षयं यान्ति नराधिप!।
पूर्वाष्टमी तदा कुर्यादन्यथा चाऽशुभं भवेत्॥ इति।

तथा च षड्दण्डाऽधिकसप्तमीवेधे परदिने चाऽष्टमीसद्भावे नवमीयोगप्रशस्तत्वात्परैवेति पूर्ववाक्यानां विषयः। अत एवोक्तमौर्वेण—

सप्तमी बहुला यत्र परतश्चाष्टमी भवेत्॥
तेन शल्यमिदं प्रोक्तं पुत्रपौत्रधनक्षयम्॥ इति।

अत्र च यावत्सप्तमीसद्भावे परदिनेऽष्टमी भवति तावती सप्तमी शल्यमित्युच्यते न सप्तमीमात्रम्। तथा च सप्तमीशल्यं निषेधन्ति भोजादिवाक्यान्यपि लब्धविषयाणि। यान्यपि सामान्यत एव सप्तमीयोगं निषेधन्ति तान्यपि शल्याऽभिप्रायाण्येव। उपसंहारन्यायात्। नन्वेवमु-

भयविधाऽष्टमीविधायकवाक्यस्वास्थ्येऽप्युभयविधाऽष्टमी-
निन्दकानि दुःस्थान्येवेति चेत्, न । निन्दकानामुभय-
ताऽपि स्वस्वविधेयस्तावकत्वात् । तथा च प्रधानविधा-
यकस्वास्थ्ये तद्गुणानां निन्दाऽर्थवादानां सुतरां स्वास्थ्य-
मेवेति । तस्माद्विशेषवचनबलेनैवोभयेषां वाक्यानां वि-
रोधपरिहारेण व्यवस्था प्रामाणिकैः करणीया । एवं च
सति यत्केनचिद्दिवोदासोदाहृतविशेषवाक्यानाममूलता-
मुक्त्वा तदितरेषां च सामान्यवाक्यतया विश्वरूपोदाहृ-
तविशेषवाक्यैर्बाधितत्वेन महाष्टम्यतिरिक्ताष्टमीविषयत्वं
प्रावोचि, तदतिमात्रेण वचनविरोधपरिहाराऽसामर्थ्यमा-
त्मीयमपह्नुवानस्य शिष्यबन्धनमात्रम् । न हि प्रामाणि-
का धर्मनिरूपणे प्रवृत्ता अमूलकैर्वाक्यैर्धर्मं विप्लाव-
यन्ति । तथात्वे निर्णयमात्रोच्छेदप्रसङ्गः । तादृशा-
नाऽश्वासस्य सर्वत्राऽपि सम्भवात् । न च मुनिनामानु-
दाहरणादमूलत्वमिति वाच्यम् । परमशिष्टाऽऽचार्यस्याऽऽ-
र्यस्य विज्ञानेश्वरस्याऽपि कृतौ शतशस्तथाविधानां
दर्शनात् । तस्मादुक्तव्यवस्थैव ज्यायसीति । यदपि
कैश्चिदुक्तं सप्तमीविद्धाऽष्टमीविधायकानि वाक्यानि कृष्णा-

ष्टमीविषयाणीति तदपि न।

अष्टमीनवमीयुग्मे महोत्साहे महोत्सवः।
शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि॥

इतिवाक्यदर्शनात्। किं च सामान्यवाक्यानां कृष्णाऽष्टमीविषयत्वेऽपि भोजराजीयवाक्यानां महाष्टमीप्रकरणगतानां दिवोदासोदाहृतविशेषवाक्यानां च विरोधाऽपरिहारात्। अथाऽपि कृष्णाष्टमीविषयत्वाऽभिनिवेशस्तर्हि पञ्चदशदिवससाध्यदेवीपूजायामाश्विनकृष्णपक्षे अष्टम्यां देवीमधिवास्य नवम्यां च प्रबोध्याऽग्रिमाष्टमीपर्यन्तं या पूजा क्रियते तत्र या कृष्णाऽष्टमी तद्विषयाणि वा भवन्तु। तदुक्तं देवीपुराणे—

कन्यायां कृष्णपक्षे तु पूजयित्वाऽधिवासयेत्।
नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः॥ इति।

अत्र नवम्यां बोधनविधानादष्टम्यामधिवासनमर्थसिद्धं भवतीति।

## अथ नवमीनिर्णयः।

स च यद्यपि पूर्वोदाहृतरूपनारायणभोजराजादिवाक्यैरष्टमीनिर्णयेनैव सिद्धस्तथाऽपि संशयव्युदासार्थं

पुनः कानि चिद्वाक्यानि लिख्यन्ते । तत्र तावद्युग्मवाक्यं "वसुरन्ध्रयोः" इति । पाद्मेऽपि—

अष्टम्या नवमी विद्धा नवम्या चाष्टमी युता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ इति ।

भविष्यपुराणेऽपि—

नवम्या सह कार्या स्यादष्टमी नवमी तथा ॥ इति ।

दशमीयुक्तां च निषेधति स्कन्दपुराणम्—

न कार्या नवमी तात ! दशम्या तु कदाचन । इति ।

विधिनिषेधावुभावपि ब्रह्मवैवर्त्ते—

अष्टम्या नवमी विद्धा कर्त्तव्या फलकाङ्क्षिभिः ।
न कुर्यान्नवमीं तात ! दशम्या तु कदाचन ॥ इति ।

तदेवमेतैर्वाक्यैरष्टमीविद्धैव सामान्यतो नवमी ग्राह्येति सिद्धम् । विशेषतोऽपि देवीपुराणेऽष्टमीविद्धैव विहिता—

अश्वयुक्शुक्लनवमी त्वष्टमी मूलसंयुता ।
सा महानवमी तस्यां जगन्मातरमर्चयेत् ॥

अत एव माधवाचार्यैरष्टमीविद्धैव नवमी ग्राह्येति प्रतिपाद्य सेयं नवमी भविष्यत्पुराणोक्तदुर्गाव्रतादौ द्रष्ट-

व्येत्युक्तम् ।

तथा हि भविष्यपुराणे—

दुर्गां सम्पूज्य दुर्गाणि नवम्यां तरतीच्छया ।
सङ्ग्रामे व्यवहारे च सदा विजयमश्नुते ॥
मासि चाश्वयुजे वीर ! नवमी या नराऽधिप ! ।
तस्यां यत्क्रियते वीर ! नरैः स्नानादिकं विभो ! ॥
तत्सर्वमक्षयं तेषां तद्वै सिद्धिकरं तथा ।
नवम्यां श्रीसमायुक्ता देवैः सर्वैः सुपूजिता ॥
जघान महिषं दुष्टमवध्यं देवतादिभिः ।
लब्ध्वाऽभिषेकं वरदा शुक्ले चाश्वयुजस्य तु ॥
तस्मात्सा तत्र सम्पूज्या नवम्यां चण्डिका बुधैः ॥

इत्यादि व्रतस्वरूपमुक्तम् । विश्वरूपाचार्यैरप्यष्टमीविद्धैव नवमी ग्राह्या न दशमीविद्धेत्युक्तम् ।

नवमी सह कार्या स्यादष्टम्या सततं नृप ! ।
न कुर्यान्नवमीं तात ! दशम्या तु कदाचन ॥
यो मोहाद्दशमीवेधे नवम्यां चण्डिकां यजेत् ।
पूजाभारो महामोहो वृथा स्यात्तस्य नान्यथा ॥ इति ।

देवीपुराणेऽपि—

अम्बिकापूजने स्कन्दनवमी दशमीयुता ।
वर्जनीया प्रयत्नेन पशुपुत्रादिनाशिनी ॥ इति ।

किं च पारणादावपि दशमीयुक्ता न ग्राह्येत्युक्तं ब्रह्माण्डपुराणे—

आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।
नवम्यां पारणं कुर्याद्दशमीसहिता न चेत् ॥
दशमीमिश्रिता यत्र पारणे नवमी भवेत् ।
दुःखदारिद्र्यदा ज्ञेया तथा व्रतविनाशिनी ॥इति ।

रुद्रयामलेऽपि—

दशम्या मिश्रिता यत्र पारणे नवमी भवेत् ।
सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥ इत्यादि ।

यानि तु कैश्चिद्दशमीविद्धानवमीमङ्गीकुर्वाणैर्वाक्यान्युदाहृतानि । यथा सौरपुराणे—

मासि चाश्वयुजे वीर ! नवमी या नराऽधिप ! ।
तस्यां स्नानं जपो होमो दानं चैव विशेषतः ॥
अश्वयुक्शुक्लनवमीमुहूर्त्तं वा कला यदि ।
सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभिः ॥

तथा—

इषे तु शुक्लनवमी सङ्गवस्पृग्यदा तदा ।

दुर्गा भगवती पूज्या लक्ष्मीविद्याजयार्थिभिः ॥ इति ।

तेष्वाद्यं तावत् "मासि चाश्वयुजे वीर !" इतिवाक्यं स्नानदानादिबोधकं दशमीयुक्तनवमीविधायकं कथमिति नाऽवधारयामः । यत्पुनर्द्वितीयं "अश्वयुक्शुक्लनवमी" इतिवाक्यं तदपि मुहूर्त्तमात्रसत्त्वे नवम्याः सकलत्वमात्रप्रतिपादकम् । यथा—

सा तिथिः सकला ज्ञेया यस्यामभ्युदितो रविः॥इति।

न पुनर्दशमीयुक्तनवमीग्राह्यत्वप्रतिपादकम् । न च मुहूर्त्तमात्राया नवम्याः सकलत्वप्रतिपादनं नादृष्टार्थं किं तु तादृश्या नवम्या ग्राह्यत्वार्थमेवेति वाच्यम् । सकलत्ववचनस्य प्राशस्त्यपरतयाऽर्थवादस्य लिङ्गत्वेनाऽष्टमीयुक्तनवमीग्राह्यत्वप्रतिपादकप्रत्यक्षश्रुतिविरोधेन श्रुत्यन्तराऽनुमापकत्वासम्भवात् । तर्हि तस्य का गतिरिति चेत, गतिमवगच्छ । अष्टमीदिने मुहूर्त्तमात्तसत्त्वे प्राशस्त्यपरतयोपपत्तिः पूर्वोदाहृतानेकवाक्याऽनुरोधात् । न चोदयकालीनमुहूर्त्तमात्रपरत्वमिति वाच्यम् । अस्यार्थस्य

वाक्यादप्रतीतेः । एतेन तृतीयमपि व्यवस्थापितम् । यदा यदि अष्टमीदिनेऽपि सङ्गवं स्पृशति तदा तर्हि फलातिशयार्थेत्यर्थपरत्वात् । यद्वा सङ्गवकालीननवम्यां भगवतीपूजा लक्ष्म्यादिफलविशेष एव विधीयत इति विशिष्टविध्यन्तरत्वान्नास्त्यस्य बाधकम् । अन्यथा विशिष्टविधाने विशिष्टाऽनुवादे वाक्यभेदापत्तेः । एवं चाऽनेकविधिनिषेधवाक्यानि सुस्थानि भवन्ति । तस्मादष्टमीयुक्तैव नवमी ग्राह्येति स्थितम् ।

## अथाष्टमी पूजाविधिः ।

भविष्योत्तरे—

तत्राऽष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः। इति।

अत्राहनीतिपदश्रवणाद्दिवापूजा प्रतीयते इति कश्चित् । तन्न । अहःपदस्याऽहोरात्रपरत्वात् । तेन रात्रावेव पूजा । उक्तं च देवीपुराणे—

आश्विने मासि मेघान्ते महिषासुरमर्द्दिनीम् ।
देवीं सम्पूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च ॥ इति ।

अष्टमीष्विति बहुवचनं पाशबहुत्ववद् घटिकाद्यत्र-यत्वपरम्। विश्वरूपेऽपि—

अष्टमीरात्रिमासाद्य पूजां गृह्णाति पार्वती।
निशायां पूजिता देवी वैष्णवी पापनाशिनी॥
तस्मात्सर्वप्रयत्नेन अष्टम्यां निशि पूजयेत्।

देवीपुराणे—

कन्यासंस्थे रवावीशशुक्लाष्टम्यां प्रपूजयेत्।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः॥
पूजां समाहरेद्देव्या महाविभवविस्तरैः।

पूजोपकरणानि ब्रह्माण्डपुराणे—

उपोषितैर्वस्त्रधूपमाल्यरत्नाऽनुलेपनैः।
दीपरत्नैस्तथा भक्ष्यैः फलैर्मूलैश्च धान्यकैः॥
आमिषैर्विविधैः शाकैर्होमैर्नीराजनैरपि।

अत्रोपोषितैरिति सामान्योपादानेऽपि पुत्रवद्गृह-स्थव्यतिरिक्तैरिति ध्येयम्।

उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्।
यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत्॥

इति कालिकापुराणे पुत्रवता महाष्टम्युपवासानि-

षेधात् । अत्र च पूजासम्भारविशेषो ग्रन्थान्तरादवगन्तव्यः ।

## अथ होमः ।

नारदीये—

तिलाज्यकुसुमादीनि पायसं मधुशर्कराः ।
हविर्द्रव्याणि जुहुयाद् दुर्गाष्टम्यां विशेषतः ॥

राजमार्त्तण्डेऽपि—

अष्टम्यां रात्रियोगे कृतनियमविधेर्यज्ञकर्म प्रदिष्टम्॥इति।

धौम्योऽपि—

शुम्भासुरवधार्थाय रक्तबीजो महाबलः ।
अष्टम्यां निहतो देव्या रात्रौ चैत्राऽरुणोदये ॥
ततः प्रभृति विन्ध्याद्रौ स्थिता पूजाप्रवर्त्तिका ।
शास्त्रार्थमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ॥
मांसानि तत्र होमार्थे मेषाद्यानि च सर्वशः ।
अजस्त्वेकस्तु होतव्यो रक्तवर्णो विशेषतः ॥
कृष्णवर्णश्च होतव्यो गौरस्तित्तिर एव वा ।
रोहितं मत्स्यमांसं च होतव्यं जयमीप्सता॥इति।

अष्टमीविधिमधिकृत्य श्रुतत्वादप्यष्टम्यां होमः प्रति-

पाद्यते । अत एव नवम्यां होमनिषेधोऽपि कालनिर्णये—

नवम्यां ज्वलनं वह्नेः पूर्णायां पशुघातनम् ।
भद्रायां गोकुलक्रीडा तत्र राज्यं विनश्यति ॥

तमेतमष्टमीहोमं रूपनारायणादयः प्रयोगकारा अप्यनुमन्यन्ते । तत्र मन्त्र उक्तो धौम्येन—

होमस्तत्र प्रकर्त्तव्यः स्वमन्त्रेण जयार्थिभिः ।
जातवेदसेतिमन्त्रेण सम्मन्त्र्य परमाहुतिम् ॥ इति ।

स्वमन्त्रो गुरूपदिष्टो मन्त्रः । जातवेदस इति वा ।

डामरकल्पे—

रुद्राध्याये यथा होमो मन्त्रेणैकेन साध्यते ।
चण्डीसप्तशतीजाप्ये होममन्त्रो नवाक्षरः ॥
कथितः पूजनाऽध्याये तेन होमो भवेदिह ।
नमो देव्यै महादेव्यै शिवायै सततं नमः ॥
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ।
अथवाऽयं भवेद्धोमः श्लोकैः स्तोत्रनिरूपितैः ॥ इति ।

क्वचिन्नवम्यामपि होमः स्मर्यते—

नवम्यां च जपं होमं समाप्य विधिवद्बलिम् ।
यात्रां वैजयिकीं कुर्याद्दशम्यां श्रवणेऽपि वा ॥ इति ।

सौरपुराणेऽपि—

मासि चाश्वयुजे वीर ! नवमी या नराधिप ! ।
तस्या स्नानं जपो होमो दानं चैव विशेषतः ॥ इति ।

स चाष्टम्यामसम्भवे नवम्यां कार्यः । उक्तं च रुद्रयामले दशमेऽध्याये—

नवम्यां वा विशालाक्ष! कार्या होमादिकाः क्रियाः । इति ।

अत्र च वाश्रवणात्पूर्वत्राऽसम्भवे इति गम्यते ।
यद्वा तयोः कल्पयोर्यथाकुलाचारं व्यवस्था कार्या ।

अथेदं विचार्यते । किं स्त्रीशूद्राणामपि होमाधिकारोऽस्ति नवेति । तत्र स्त्रीशूद्राणां होमे नाऽधिकारः विध्यभावात् । न च सामान्यविधिना तत्सिद्धिः तस्य त्रैवर्णिकविषयत्वात् । उक्तं च भविष्ये—

शूद्रोक्त्या विहितं यच्च यश्च मन्त्र उदाहृतः ।
तद् द्वयं विप्रवदनाद् ग्राह्यं शूद्रैः सदैव हि ॥ इति ।

एतेन शूद्र इदं कुर्यादित्येवंविधिना यच्छूद्रस्य विहितं तत्रैव तस्याऽधिकारो नान्यत्रेति सिद्धम् । किं च होमस्य मन्त्रसाध्यतया शूद्राणां च मन्त्राऽभावा-

न्नाधिकारः । कथं मन्त्राऽभाव इति चेत् न विकल्पाऽसहत्वात् । तथा हि—किं वैदिको मन्त्र उत पौराणः अहोस्विन्नमोमन्त्र इति । नाद्यः ।

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति तन्निषेधात् । न द्वितीयः ।

मोहाद्वा कामतः शूद्रः पुराणं संहितां श्रुतिम् ।
पठन्नरकमाप्नोति पितृभिः सह कुट्टनम् ॥

इतिभविष्ये निषेधात् । नान्त्यः । नवरात्रीयहोमस्योत्पत्तिवाक्ये मन्त्रान्तराऽवरुद्धत्वेनोत्पत्तेः । उक्तं च धौम्येन—

होमस्तत्र प्रकर्त्तव्यः स्वमन्त्रेण जयार्थिभिः ।
जातवेदसमन्त्रेण सम्मन्त्र्य परमाहुतिम् ॥ इति ।

नचोत्पत्तिशिष्टोऽपि गुणो अधिकारिविशेषे बाध्यत इति वाच्यम् । यथाविनियोगमधिकारो न तु यथाऽधिकारं विनियोग इति न्यायविद्भिः साधनात् । न च 'स्वमन्त्रेण' इत्यनेन गुरूपदिष्टमन्त्रेणैव स्यादिति वाच्यम् । सर्वेषां तदभावात् । न च स्वस्याऽनधिकारे प्रतिनिधिसम्भवः । तस्मान्नाऽधिकार इति । अत्रोच्यते—

श्रौतं द्विजातयः कुर्युः स्मार्त्तं शूद्रः समाचरेत् ।

इतिवचनाद् द्विजातिविशेषविहितकर्मभिन्नसकलस्मार्त्तकर्मण्यधिकारः शूद्रस्य । सङ्कोचे मानाभावात् । न च मन्त्राऽभावान्नाधिकार इति वाच्यम् । ब्राह्मणपठितमन्त्रादेव तत्सिद्धेः । उक्तं च ब्रह्मपुराणे—

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते । इति ।

तस्माद् ब्राह्मणपठितमन्त्रैः शूद्रादिनाऽपि होमकरणे न बाधकं पश्यामः । न च शूद्रस्य स्वतो होमकर्तृत्वं काऽपि न दृष्टचरमिहापि न स्यादिति वाच्यम् । वैश्वदेवहोमे तद्दर्शनात् । अभ्युपगतं चैतद् विज्ञानेश्वराचार्यैरपि 'तत्र वैश्वदेवं लौकिकेऽग्नौ कर्त्तव्यं वैवाहिकेऽग्नावित्याचार्याः' इतिमतोपन्यासव्याजेन । वस्तुतस्तु "स्त्रीभिः शूद्रैश्च म्लेच्छैश्च" इत्यादिवाक्येन प्रधानाऽधिकारे सिद्धे अधिकृताधिकारेष्वङ्गेषु होमादिषु सुतरामधिकारः सिद्ध एवेति क्व विचाराऽवसरः । म्लेच्छशब्दश्च शबरकिरातपुलिन्दादिपर इति व्याख्यातं प्राक् ।

अपि च—

दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥

इतिपराशरवाक्येन यो विप्रः शूद्राद्दक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यादिसिद्धये वैदिकैर्मन्त्रैर्जुहोति तस्य ब्राह्मणस्यैव प्रत्यवायः शूद्रस्तु होमफलं लभेतै-वेति माधवाचार्यव्याख्याविख्यापितेन सकलसंशयो-च्छेद इत्यलं वहुना । इतोऽप्यधिकं युक्तिमुक्ताकदम्ब-कं शूद्राधिकारमीमांसायामेवाऽनुसन्धेयम् ।

## अथ नवमीपूजाविधिः ।

भविष्यपुराणे—

दुर्गां सम्पूज्य दुर्गाणि नवम्यां तरतीच्छया ।
सङ्ग्रामे व्यवहारे च सदा विजयमश्नुते ॥
मासि चाऽऽश्वयुजे वीर ! नवमी या नराऽधिप ! ।
तस्यां यत्क्रियते वीर ! नरैः स्नानादिकं प्रभो ! ॥
तत्सर्वमक्षयं तेषां तद्वै सिद्धिकरं तथा ।
नवम्यां श्रीसमायुक्ता दैवैः सर्वैः सुपूजिता ॥

जघान महिषं दुष्टमवध्यं देवतादिभिः ।
लब्धाऽभिषेकं वरदा शुक्ले चाऽऽश्वयुजस्य तु ॥
तस्मात्सा तत्र सम्पूज्या नवम्यां चण्डिका बुधैः ।
महत्त्वं हि यतः प्राप्ता अत्र देवी सरस्वती ॥
अतोऽर्थे महती प्रोक्ता नवमीयं सदा बुधैः ।
पूजयित्वा महादेवीं नवम्यां चण्डिकां शुभाम् ॥
महत्त्वं प्राप्तवान् वीर ! ब्रह्मा विष्णुस्तथा हरः ।
तस्मादियं महापुण्या नवमी पापनाशिनी ॥
उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः ।
मासि चाऽऽश्वयुजे वीर ! शुक्लपक्षे त्रिशूलिनीम् ॥
नवम्यां पूजयेद्यस्तु तस्य पुण्यफलं शृणु ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥
तत्फलं लभते वीर ! देवीदेवगणैर्वृतः ।

## अथबलिदानम् ।

राजमार्त्तण्डे—"नानाजातेः पशोर्वा हतिरपि नवमीरौद्रयोगे प्रदिष्टा" इति । तथा—"अष्टम्यामशनरहितस्त्यक्तनिद्रश्च पूजाम्" इत्युक्त्वा "प्रातःकाले पशुबलिविधिः" इत्याह । कात्यायनोऽपि "नानापाशवमज-

मांसरुधिरैः कृत्वा नवम्यां बलिम्" इति । ज्योतिःशास्त्रेपि—

कुर्याज्जागरमष्टम्यां नवम्यां विधिवद्बलिम् ।

तथा—

सप्तम्यां पत्रिकापूजा अष्टम्यां चाऽप्युपोषणम् ।
पूजा च जागरं चैव नवम्यां विधिवद्बलिः ॥ इति ।

"उत्तरासु बलिं दद्यात्" इति च । अत एव दशम्यां निषेधोऽपि—

दशम्यां दीयते यत्र बलिदानं च मानवैः ।
तद्राष्ट्रं नाशमायाति मकरोपद्रवैः स्फुटम् ॥ इति ।

ब्रह्मवैवर्तेऽपि—

अतोऽपराह्णिके काले बलिदानं प्रशस्यते ।
दशमीं वर्जयेत्तत्र नाऽत्र कार्या विचारणा ॥
नन्दाया दर्शने रक्षा बलिदानं दशासु च ।
भद्रायां गोकुलक्रीडा देशनाशाय जायते ॥

कालनिर्णयेऽपि—

नवम्यां ज्वलनं वह्नेः पूर्णायां पशुघातनम् ।
भद्रायां गोकुलक्रीडा तत्र राज्यं विनश्यति ॥

अष्टम्यामपि बलिदानं विश्वरूपे श्रूयते—

ततो रात्र्यपरे भागे महिषं तत्र दापयेत् ।
पञ्चाऽब्दलक्षणोपेतमजमेकं तथैव च ॥

भविष्येऽपि—

विचित्रां रचयेत्पूजामष्टम्यामुपवासयेत् ।
दुर्गाऽग्रतोजपन्मन्त्रमेकचित्तो धृतव्रतः ॥
तदर्द्धयामिनीशेषे विजयार्थं महीपतिः ।
पञ्चाऽब्दलक्षणोपेतं गन्धपुष्पस्रगन्वितम् ॥
विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् ॥ इति

देवीपुराणेऽपि—

आश्विने मासि सम्प्राप्ते महिषासुरमर्द्दिनीम् ।
देवीं सम्पूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च ॥
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।

अत्रैवं व्यवस्था—अष्टम्यां बलिदानप्रतिपादकानि सर्वाणि वचनानि राजविषयाणि । "विजयार्थं महीपतिः" इतिविशेषवचनात् । इतराणीतरविषयाणि । सामान्य-

वाक्यत्वात् । अत एव कालिकापुराणे—

पक्षिणः कच्छपा ग्राहा मत्स्या नवविधा मृगाः ।
महिषो गोधिकागारे छागो बभ्रुश्च शूकरः ॥
खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः ।
शार्दूलश्च नरश्चैव स्वगात्ररुधिरं तथा ॥
चण्डिकाभैरवादीनां बलयः परिकीर्त्तिताः ।

इत्युपक्रम्य

सिंहं व्याघ्रं नरं चापि स्वगात्ररुधिरं तथा ।
न दद्याद्ब्राह्मणा मद्यं तथा दैव्यै कदाचन ॥
सिंहव्याघ्रनरान् दत्त्वा ब्राह्मणो नरकं व्रजेत् ।
इहाऽपि स्यात्स हीनायुः सुखसौभाग्यवर्जितः ॥
स्वगात्ररुधिरं दत्त्वा चात्मवध्यामवाप्नुयात् ।
मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ॥
न कृष्णसारं विसृजेद्बलिं तु क्षत्रियादिकः ।
प्रददत्कृष्णसारं तु ब्रह्मवध्यामवाप्नुयात् ॥
यत्र सिंहस्य व्याघ्रस्य नरस्य विहितो वधः ।
ब्राह्मणोक्त्याऽनुवाक्यादौ तत्रायं विहितः क्रमः ॥

कृत्वा घृतमयं व्याघ्रं नरं सिंहं तथैव च ।
अथ वाऽपूपविकृतं यवक्षोदमयं च वा ॥
घातयेच्चन्द्रहासेन तेनं मन्त्रेण संस्कृतम् ।

तथा—

अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः ।
नारिकेलजलं कांस्ये ताम्रे वा विसृजेन्मधु ॥
नापद्यपि द्विजो मद्यं कदाचिद्विसृजेदपि ।
ऋते पुष्पासवादुक्तात्कुजलाद्वा विशेषतः ।

इत्यादिना वर्णविशेषेण पशुविशेषनिषेधः, प्रतिनिधिविधानं च दृश्यते । तथा च मध्यदेशीयशिष्टाचारोऽपि तथा । तस्मात्सर्वेषां तदिति सिद्धम्। अत एवोपयुक्तपशुगतिकथनपूर्वकं घ्नतां दोषाऽभावः प्रतिपादितः—

भवानीप्राङ्गणे प्राणा येषां यान्ति वरानने ।
तेषां स्वर्गे चिरं वासो घ्नतां पापं न विद्यते ॥

तथा पुराणसमुच्चये श्रीकृष्णवाक्यम्—

महानवम्यां ये देव्या हन्यन्ते महिषादयः ।
सर्व्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते ॥

भवानीप्राङ्गणे प्राणा येषां यान्ति युधिष्ठिर ! ।
तेषां स्वर्गे चिरं वासो वीरास्तेऽप्सरसां प्रियाः ॥इति ।

धौम्योऽपि--

उद्दिश्य दुर्गां हन्यन्ते विधिना यत्र जन्तवः ।
ते यान्ति स्वर्गे कौन्तेय ! घातयन्तोऽपि शक्तितः ॥
तत्र ये ह्युपयुज्यन्ते प्राणिनो महिषादयः ।
सर्व्वे ते स्वर्गमायान्ति घ्नतां पापं न विद्यते॥इति ।

कालिकापुराणेऽपि—

बलेः पूर्वोदिता मन्त्रा नित्यं ग्राह्यास्तु साधकैः ।
स्वयं मन्त्रस्तु वक्तव्यस्तस्य हत्याविहानये ॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञेऽवधो वधः॥इति ।

नन्वस्य वैधत्वे दोषाऽभावकीर्त्तनमनुपपन्नम् । न हि अग्नीषोमीयादिवधे दोषाऽभावकीर्त्तनमस्ति विधानादेव दोषाऽभावसिद्धेरिति चेत्, मैवम् । विधिप्रवर्त्तितस्य प्रबलतरालस्यदुर्वासनादिदोषाऽपनोदनद्वाराऽर्थवादानां प्रामाण्यस्थापनात् । नैतावताऽन्यतराऽनर्थक्यं शक्यते वक्तुम् ।

अथ प्रसङ्गेन मध्येनवरात्रं सूतकादिपाते निर्णयः ।

तत्र यद्यपि सर्वकर्मणां निषेधः सामान्यतो दृश्यते । तथाऽपि केषांचित्प्रतिप्रसवदर्शनादनुष्ठानं सम्भवतीति प्रकृते विचारः । तत्र सामान्यतस्तावद्विष्णुराह—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

सूतकमिति मृतकस्याऽप्युपलक्षणम् । तुल्यन्यायत्वात् । अत्र प्रारम्भशब्देन सङ्कल्पमात्रम् ।

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।

इत्यनेन सङ्कल्पस्याऽऽरम्भत्वव्यपदेशात् । तथा सङ्कल्पाऽनन्तरमन्त्यपदार्थपर्यवसानपर्यन्ते कालेऽत्र सूतकाऽभावः इति विवेकः । "सङ्कल्पो व्रतसत्रयोः" इतिविशेषवचनात् । विशेषतोऽपि विश्वरूपनिबन्धे—

आश्विनस्याऽमले पक्षे प्रारब्धे नवरात्रके ।
शावे सूते समुत्पन्ने क्रियाः कार्याः कथं बुधैः ॥

इतिप्रश्नपूर्वकमुत्तारितम् ।

प्रवृत्ते नवरात्रे तु सूतकं च यदा भवेत् ।
देवीपूजा प्रकर्त्तव्या पशुयज्ञविधानतः ॥

तथा—

सूतके पूजनं प्रोक्तं दानञ्चैव विशेषतः ।
देवीमुद्दिश्य कर्त्तव्यं तत्र दोषो न विद्यते ॥ इति ।

यद्वाऽन्यद्वारा पूजा कारणीया । तदुक्तं देवीपुराणे—

स्वयं वाऽप्यन्यतो वाऽपि पूजयेत्पूजयीत वा । इति।

एकोऽत्र स्वार्थे णिच् । अपरश्च प्रयोजकव्यापारे इति न पौनरुक्त्यम् ।

## अथ पारणानिर्णयः ।

तत्र विचार्यते किमिदं पारणं दशम्यां कार्यमुत नवम्यामिति । तत्र दशम्यामिति न्यायविदो मन्यन्ते । व्रतस्य नवरात्रसमाख्यया समाख्यातत्वात् । तथा हि समाख्याऽपि हि श्रुत्यादिवद्विनियोजिका । नवरात्रशब्दश्च नवानां रात्रीणां समाहार इत्यस्मिन्नर्थे निष्पन्नो यौगिकः । यौगिकश्च शब्दः समाख्येत्युच्यते । तेन

नवरात्रोपवासेन यथाशक्त्या नृपोत्तम ! ।
एवं च विन्ध्यवासिन्यां नवरात्रमुपोषितः ॥
स्वयं नियमतः कुर्यान्नवरात्रमुपोषयन् ।

इत्यादिवाक्येषु नवरात्रशब्देनैव तदुपादायोपवास-विधानान्नवमीमभिव्याप्योपवाससिद्धौ दशम्यां पारणमर्थतः सिद्ध्यति । ननु तिथिह्रासवृद्ध्यादौ रात्रीणां नवसङ्ख्यत्वाभावेन नवरात्रसमाख्याऽयोगात्कथं तया विनियोग इति चेत् तुल्यमेतत् । भवतोऽपि ह्रासवृद्ध्यादौ नवरात्ररूपकालसम्बन्धस्य प्रवृत्तिनिमित्तस्याऽभावे कथं नवरात्रशब्दवाच्यता कर्मणः स्यात् । तत्र यदि रात्रिशब्दस्य तिथिपरतामङ्गीकृत्य नवतिथिसम्बन्धेन नवरात्रशब्दे प्रवृत्तिरिति वाच्यम् । तर्हि प्रकृतेऽप्येतत्तुल्यम् । तदेवं "नवरात्रोपवासेन" इत्यादौ उपवासेष्ववच्छेदकसङ्ख्याकाङ्क्षायां तिथ्यवच्छेदिकयैव सङ्ख्ययोपवासपरिच्छेदान्नवमीपर्यन्तत्वेन दशम्यां पारणमर्थसिद्धमेवेति । उक्तं च धौम्येन—

प्रतिपदादिपूर्णान्तं दिनभेदेन पूजयेत् । इति ।

अत्र च पूर्णायां दशम्यामन्तश्रवणात्पारणायाश्च व्रतान्तरूपत्वाद्दशम्यां पारणमिति । अत्रोच्यते । स्यात्समाख्ययैवोपवाससङ्ख्यानिर्णयः, यद्युपवासेष्ववच्छेदकसङ्ख्याकाङ्क्षायां प्रमाणान्तरं सङ्ख्याप्रापकं न स्यात् । अ-

स्ति च तत्—

दुर्गोत्सवे स्मृतं देव ! उपवासस्य सप्तकम् ।
अष्टमे दिवसे होमस्ततः किंचित्तु भक्षयेत् ॥

इति रुद्रयामलीयं वचनम् । श्रुतिश्चेयं "उपवासस्य सप्तकम्" इतिसमाख्यातो बलवती । ततो न्यूनबला समाख्या नोपवासेष्ववच्छेदिकां सङ्ख्यां विनियुङ्क्ते । तथा चोपवासानां नवसङ्ख्यत्वेन नवम्यभिव्याप्तौ दशम्यां पारणमर्थसिद्धमिति कुत एतत् । किं च "नवम्यां पारणं कुर्यात्" इत्यादिपारणाकालविधायकश्रुतिसद्भावेनार्थेन लिङ्गेन तत्कल्पना युक्ता । अत्र "पूर्णान्तम्" इति वचनबलेन दशम्यां पारणमित्युच्यते तदपि न । तस्याऽपि पूर्णायां दशम्यामन्तो विसर्जनं यथा भवति तथा पूजयेदित्यर्थपरतयाऽवश्यव्याख्येयत्वात् । अन्यथा नवमीपारणविधायकवाक्यैर्विरोधो दशमीविसर्जनविधायकवाक्यैर्भिन्नमूलकता वाऽस्य केन वार्येत । तस्मान्न दशम्यां पारणं किं तु नवम्यामेव । नवमीपारणविधायकवचननिचयात्, तादृशविधिलिङ्गदर्शनात्, सप्तोपवासविधिबलात्, अष्टमीपर्यन्तोपवासविधेः, सप्तोपवासलिङ्गद-

र्शनात्, व्रतस्य नवमीपर्यन्तताश्रवणात्, दशमदिवसे पारणनिषेधात्, दशमीपारणनिषेधात्, दशमीविद्धनवमी-पारणनिषेधात्, अधिकोपवासनिषेधाच्चेति दशहेतुसद्भावात् । तत्राऽऽद्यस्तावत् ब्रह्माण्डपुराणे—

आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।
नवम्यां पारणं कुर्याद्दशमीसहिता न चेत् ॥

रुद्रयामलेऽपि—

वासन्ते नवरात्रे तु पूज्या स्याद्रक्तदन्तिका ।

इति प्रक्रम्योक्तम्—

नवम्यां वा विशालाक्ष ! कार्या होमादिकाः क्रियाः ।
पारणं च प्रकुर्वीत देवीपूजनपूर्वकम् ॥

तत्रैव दशमीपारणं निन्दित्वोपसंहृतम्—

तस्मात्तु पारयेद्देव ! नवम्यां भक्तितत्परः ।

तथा अन्वयव्यतिरेकाभ्यां नवमीपारणप्रशंसा-मुक्त्वोपसंहृतं तत्रैव—

नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति ।
दशम्यां पारिता देवी कुलनाशं करोति हि ॥
तस्मात्तु पारणं कार्यं नवम्यां विबुधाऽधिप!॥इति ।

पुनश्च तत्रैवोपसंहृतम्——

नवम्यां पारणं कार्यमन्यथा दुःखदं भवेत् ।

इति वचननिचयसत्त्वान्नवम्यां पारणम् ।

अथ द्वितीयः ।

नारदीयपुराणे पूर्वोदाहृतनवरात्रप्रस्तावे—

हविर्द्रव्याणि जुहुयाद् दुर्गाष्टम्यां विशेषतः ।
रात्रौ जागरणं कुर्याद् गीतवाद्यपुरस्सरम् ॥
ततः प्रभाते विमले प्रातःस्नात्वा यथाविधि ।

इत्यादिनाऽष्टम्युत्तरदिनकृत्यं किं चिदुक्त्वान्तेऽभिहितम्——

स्वयं च पारणं कुर्यादिष्टबन्धुजनैः सह ।
अहःशेषं समासीत शिष्टैरिष्टैः शिवाप्रियैः ॥इति ।

एतेनाऽष्टम्यां रात्रौ होमजागरणाद्यनेकधर्मानभिधाय प्रातरपि स्नानदेवीपूजनकुमारीभोजनद्विजपूजनव्रतपूर्णतावाचनाद्यनन्तरं पारणविधानान्नवम्यामेव तत्सिद्ध्यतीत्येकं लिङ्गम् । किं च रुद्रयामलेऽपि नवरात्रप्रक्रमे——

प्रत्यहं पूजनं कुर्यात्त्रिकालं भक्तितत्परः ।
अष्टम्यां जागरं चैव महापूजनपूर्वकम् ॥
होमं कुर्यान्महारात्रे बलिदानं च माधव ! ।
प्रातर्वै पारयेद्देवीं ब्राह्मणान् भोजयेत्तथा ॥
कुमारीणां च नवकं सम्भोज्यं विविधान्नकैः ।
स्वयं च पारणं कुर्याद्रात्रौ जागरणं तथा ॥
दशम्यामभिषेकं च कृत्वा मूर्त्तिं विसर्जयेत्। इति।

अत्रोपक्रमे अष्टम्यां जागरणाद्यभिधायाऽन्ते च दशम्यामभिषेकादिकमुक्त्वा मध्ये च "प्रातर्वै पारयेत्" इत्यादिना देवीपारणतर्पणकुमारीभोजनाद्यभिधायाऽनन्तरं "स्वयं च पारणं कुर्यात्"इति वदताऽष्टम्युत्तरदिने दशमी-पूर्वदिने च पारणमुक्तं, तदेव च नवमीदिनमिति सिद्धं नवम्यां पारणमित्यपरं लिङ्गम् ।

अथ तृतीयः ।

रुद्रयामले—

दुर्गोत्सवे स्मृतं देव ! उपवासस्य सप्तकम्।
अष्टमे दिवसे होमस्ततः किं चित्तु भक्षयेत्॥इति।

अत्र कृतशुद्धसप्तोपवासस्य होमाऽनन्तरमशक्त्यादिना

किंचिल्लक्षणेऽप्युपवासस्याऽक्षत्याऽष्टोपवाससिद्धावुपवासा-नामष्टसङ्ख्यानुरोधान्नवमदिने पारणस्याऽऽवश्यकत्वान्न-वम्यां पारणं सिध्यति । यथा चाऽष्टमदिने किंचिल्लक्ष-णेऽप्युपवासत्वाऽक्षतिस्तथोपरिष्टाद्वक्ष्यामः ।

अथ चतुर्थः ।

भविष्यपुराणे—

प्रथमा द्वितीया तृतीया चतुर्थी च नराधिप ! ।
एतास्तु एकभक्तेन प्रवदन्ति मनीषिणः ॥
पञ्चमी च तथा षष्ठी सप्तमी चाऽष्टमीषु च ।
उपवासपरो भूत्वा पूजयेच्चण्डिकां बुधः ॥ इति ।

अत्र सर्वोपवासाऽसमर्थस्य चतुर्थीपर्यन्तमेकभक्तमु-क्त्वा पञ्चमीमारभ्याऽष्टमीपर्यन्तमेवोपवासगणनया नवम्यां पारणमर्थतोऽत्रगम्यते । नन्वष्टम्यामुपवासे अष्टावु-पवासा भवन्ति तथा च तृतीयहेतुसाधकं रुद्रयामलीयं "उपवासस्य सप्तकम्" इति वचो विरुध्येतेति चेत् नैष दोषः । अष्टम्युपवासस्य काम्यत्वेन नवरात्रबहिर्भूत-त्वात् । काम्यत्वं चाऽस्य भविष्योत्तरे—

अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम्।
पूजयित्वाऽऽश्विने मासि विशोको जायते नरः॥

इतिफलश्रवणात्। यद्यप्यत्रोपवासो न श्रूयते तथाऽपि

कन्यासंस्थे रवावीशशुक्लाष्टम्यां प्रपूजयेत्।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः।

तथा—

तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः।
उपोषितैर्व्वस्त्रधूपमाल्यरत्नानुलेपनैः॥

इत्यादिवाक्यैः पूजाया उपवासपूर्व्वकत्वबोधकैरेकवाक्यतापन्नेन तेनोपवासपूर्व्वकपूजाया एव फलसम्बन्धबोधकत्वात्। न च दिनद्वयसाध्यकर्मान्तरस्यैवेदं फलश्रवणमिति वाच्यम्। तत्तद्वाक्यैः प्रत्येकमुत्पादिताया एवाऽष्टमीनवमीपूजाया एकप्रयोगतासूचनाय समुदायीकरणपूर्व्वकफलसम्बन्धकरणात्। आग्नेयादित्रिकसमुदायीकरणवाक्यवदिति च (?) विरोधः इति स्यात्परं दृष्टान्ते विशेषः यदेकेन वाक्येन समुदायीकरणमपरेण

फलसम्बन्धकरणमिति । प्रकृते त्वेकेनैवोभयमपीति । अत एव रुद्रयामलीयवाक्येन सप्तोपवासानां सप्तमीपर्यन्तमेवाऽनुष्ठानात्पारणस्य च नवम्या विहितत्वादष्टम्यां किं कार्यमित्याकाङ्क्षायामुपवासपारणाविलक्षणं किंचिद्भक्षणमुक्तम् ।

उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् ।

इति न्यायात् । निषेधश्च सप्तसङ्ख्याविधानार्थः । तस्मान्न विरोधः । अथ चाष्टमादिने किंचिद्भक्षणेऽपि

उपावृत्तस्तु पापेभ्यो यस्तु वासोगुणैः सह ।
उपवासः स विज्ञेयः सर्व्वभोगविवर्जितः ॥

इत्युपवासलक्षणसत्वान्न विरोधः । न च किंचिद्भक्षणे सर्व्वभोगविवर्ज्जितत्वं नास्तीति वाच्यम् । अत्र किंचिच्छब्देनाव्रतघ्नस्य पयोमूलादेर्ग्रहणात् । तदुक्तम्—

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ इति ।

तेन पयोमूलादिभक्षणेऽप्युपवासत्वं न हीयत इति सर्व्वभोगविवर्ज्जितत्वमस्त्येव । अथ वा नित्यवत्कृतस्याऽपि तस्याऽष्टम्युपवासविधिबलात्सामर्थ्यबलाच्चाश-

क्तविषयत्वाऽवगमात । एकभक्तादिवत् । न ह्युपवास-सामर्थ्ये भक्षणं युज्यते । "प्रभुः प्रथमकल्पस्य" इतिन्याय विरोधात् । तर्ह्युपवासानां नित्यवत्कृता सप्तसङ्ख्या बाध्येतेति चेत् न, तस्याऽऽवश्यकोपवासपरिच्छेदकत्वेनाऽष्टमोपवासपरिसङ्ख्यायकत्वाभावात् । आवश्यकत्वं च सप्तरात्रप्राधान्यात् । प्राधान्यं चोत्तरत्र हेतौ स्फुटीभविष्यति ।

अथ पञ्चमः ।

कालिकापुराणे—

रामस्याऽनुग्रहार्थाय रावणस्य वधाय च ।
रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥
ततस्तु त्यक्तनिद्रा सा नन्दायामाश्विने सिते ।
रामरावणयोर्युद्धं सप्ताहं सा न्ययोजयत् ॥
व्यतीते सप्तरात्रे तु नवम्यां रावणं ततः ।
रामेण घातयामास मायया सा जगन्मयी ॥
यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत ।
तावत्तु सप्तरात्राणि सर्व्वदेवैः सुपूजिता ॥
निहते रावणे वीरे नवम्यां सकलैः सुरैः ॥

विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः ।

चक्रे कारयामासेत्यर्थः ।

ततः सम्प्रेषिता देवी दशम्यां सा सुरोत्तमैः ।

तथैव च नराः सर्व्वे कुर्युः पूजां यथाविधि ॥इत्यादि।

अथ सप्तरात्रमेव युद्धनिरीक्षिका देवी देवैः पूजितेति नरैरपि सर्व्वैः सप्तरात्रमेव पूजनीयेति वदता सप्तरात्रस्यैव प्राशस्त्येन प्राधान्यमुक्तमिति सप्तैवोपवासा युक्ता इत्येकं लिङ्गम् । तथा ज्योतिःशास्त्रेऽपि नवरात्रप्रक्रमे "शुक्लपक्षे प्रतिपदि" इत्यादिना वाजिरक्षां विधाय

एतत्प्रतिदिनं कुर्यात्सप्तरात्रमतन्द्रितः ।

कारयेद् ब्राह्मणैश्चैव शान्तिस्वस्त्ययनानि च ॥

सप्तरात्रे व्यतिक्रान्ते क्षौरितान्स्नापितांस्तथा ।

अर्चितान्विविधैर्गन्धैस्ततो नीराजयेद् बुधः ॥इति।

अत्राऽपि सप्तरात्रप्राधान्यं दृश्यते । जपहोमार्चनादिसहचरितानामुपवासानामपि सप्तरात्रमेवाऽनुष्ठानं युक्तमित्यपरं लिङ्गम्। क्वचिद् द्वितीयायामित्यपि पाठस्तत्राऽपि समाप्तिर्नवम्यामेवेति न, दोषः ।

अथ षष्ठः ।

तथा च धौम्यः—

आश्विने शुक्लपक्षे तु कर्त्तव्यं नवरात्रकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

तथा—

शुक्लप्रतिपदारभ्य यावत्स्यान्नवमीतिथिः । इति ।

तथा—

आश्विने प्रतिपन्मुख्याः पुण्याः स्युस्तिथयो नव । इति ।

एतेनाऽपि व्रतस्य नवमीपर्यन्ततैवोक्तेति । ननु "पार तीर कर्मसमाप्तौ" इत्यस्माद्धातोर्निष्पन्नः पारणशब्दो यद्यपि कर्ममात्रसमाप्तिमभिधत्ते तथाऽपि लोकशास्त्राभ्यामुपवाससमाप्तावेव पङ्कजादिवद्योगरूढो वाच्यः तथा च पारणस्य व्रतसमाप्तिरूपत्वेन व्रतप्रतियोगित्वेऽपि व्रतस्वरूपत्वाभावादुपवासाद्यात्मकस्य नवरात्रव्रतस्य "यावच्च नवमी भवेत्" इत्यादिनोक्ता नवमीपर्यन्तता न सिद्धा अष्टमीपर्यन्तमेवोपोष्य नवम्या पारणविधानादिति चेत् नैवम् । तथाऽपि सिध्यत्येव नवमीपर्यन्तता । तथा हि पारणं नाम व्रतचरमाङ्गभोजन(?)मुच्यते ।

यथा हीष्टेश्वरमाङ्गं ब्राह्मणतर्पणम् । अङ्गत्वे चाऽस्य "स्वयं च पारणं कुर्यात्" इत्यादिविधिश्रुतिरेव मानम् । किं च पारणमङ्गं न स्यात्तर्हि द्वादश्यादिषु मुख्यपारणसङ्करे अङ्गिपारणं कुर्यादिति प्रतिनिधिनियमो नोपपद्येत न हि रागप्राप्तेषु प्रतिनिधिसम्भवः । अतः पारणशब्दबलात्प्रतिनिधिबलाच्चाङ्गत्वं पारणस्य सिद्धम् । तदुक्तमादित्यपुराणे—

पारणान्तं व्रतं ज्ञेयं व्रतान्ते तद्विभोजनम् । इति ।

तथा च सङ्कल्पक्षणमारभ्य पारणान्तक्षणपर्यन्तं विततभावनान्तनिष्पातित्वेन पारणस्यापि व्रतरूपत्वम् । व्रतत्वेऽपि प्रधानत्वं नेत्यन्यदेतत् । नैतावता व्रतत्वक्षतिः । तथा च नवम्यनुष्ठीयमानव्रतस्य नवमीपर्यन्तता सिद्ध्यतीति न दोषः । नन्विदं व्रतप्रयोगबहिर्भूतमेवाङ्गमस्तु "व्रतान्ते तद्विभोजनम्" इत्यनेन व्रतसमाप्तौ तच्छ्रवणात् । यथा "संस्थाप्य पौर्णमासं वैमृधमनुनिर्वपति" इत्यनेन पौर्णमाससमाप्तौ वैमृधो विधीयते । संस्थापनान्तशब्दयोश्च पर्यायत्वादिति चेत् मैवम् । "पारणान्तं व्रतं ज्ञेयम्" इत्यस्य पारणया अन्तः समाप्तिर्यस्ये-

त्यर्थपरत्वेन पारणस्य व्रतप्रयोगबहिर्भावाऽभावात् । तथा च पूर्वोत्तरयोरेकार्थत्वमेवेति । वस्तुतस्तु प्रकृते पूजाया एव प्रधानत्वात्तदन्तस्य विसर्जनस्य दशम्यनुष्ठीयमानतया तदन्तःपातिनः पारणस्य व्रतप्रयोगबहिर्भावः शङ्कापथमेव नाऽवतरतीति दिक् ।

अथ सप्तमः ।

रुद्रयामले—

यो मोहात्पारणं कुर्याद्दशमे दिवसे विभो ! ।
तद्राष्ट्रं नाशमायाति दुर्भिक्षादिभवेन हि ॥

तथा तत्रैव—

न कुर्याद्दिनवृद्धिं तु दुर्गायाः पारणे विभो ! ।
यः कुर्यात्पारणं दूरे तस्य स्यादशुभं गृहे ॥ इति ।

अत्र दशमदिवसे पारणकरणे दशरात्रसाध्यतया व्रतस्य नवरात्रसमाख्याभङ्गोऽपि स्यात् । पारणस्याऽप्युक्तयुक्त्या व्रतरूपत्वात् ।

अथाऽष्टमः ।

ब्रह्माण्डपुराणे—

दशमीमिश्रिता यत्र पारणे नवमी भवेत् ।
सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥
यो मोहाद्दशमीवेधे नवम्यां चण्डिकां यजेत् ।
पारणं च प्रकुर्याद्वै तस्य पुण्यं निरर्थकम् ॥

अथ नवमः ।

अत्राऽयमभिसंधिः । नवम्या दशमीयोगो न स्वरूपतो निषिध्यते, किं तु पारणकालीनत्वेन । "दशम्यां पारणे कृते" इत्यनेन पारणाधिकरणत्वेन दशम्या निषेधात् । पारणकालस्य पञ्चधा विभक्तस्य दिवसस्याऽऽद्यो भागः प्रातःसंज्ञः ।

सर्वेषामुपवासानां प्रातरेव हि पारणम् ।

इतिवचनात् । तेन यदि प्रातःकाले घटिकामात्रा नवमी परस्ताच्च दशमी तदा तादृश्यां नवम्यां पारणं न कार्यमेव । कर्मकालव्याप्त्यभावात् । किं तु पूर्वेद्युरेव, तत्राऽपि कर्मकालव्याप्तिश्चेत् । तेनाऽयमर्थः—यदि पूर्वेद्युः षड्दण्डाधिका वा अष्टमी परस्ताच्च नवमी

परेद्युश्च षड्दण्डाऽधिका वा नवमी तदा परेद्युरेव पारणा। पूर्वेद्युर्नवमीमिश्राऽष्टम्या उपोष्यत्वात्परेद्युः पारणकाले दशम्यभावाच्च । इतरथा पुनस्त्रिमुहूर्त्तन्यूनाया अष्टम्याः सत्त्वेऽप्यग्राह्यत्वेनाऽप्रयोजकत्वात्पूर्वेद्युरेव पारणेति । तथा च लघुतिथिनिर्णये पद्मपुराणम्—

अष्टम्या सहिता रिक्ता न कदाचित्परायुता ।
चामुण्डापूजनं कृत्वा पारणं च ततः परम् ॥ इति ।

अष्टमीसाहित्यं चोदयव्यापित्वेन न त्रिमुहूर्त्तादिसत्त्वेन, तथात्वेनोपोष्यतापत्तेः । तथा देवीपुराणम्—

अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
पारणे सा तिथिः प्रोक्ता बलिदानं परेऽहनि ॥ इति ।

परेऽहनि अह्नः परभागे ।

अत्राऽपराह्णिके काले बलिदानं प्रशस्यते ।
दशमीं वर्जयेत्तत्र नाऽत्र कार्या विचारणा ॥

इति ब्रह्मवैवर्त्तात् । अत्र नवम्यां प्रक्रमात् परेद्युः (?) परत्वे तु दशम्यां बलिदानप्रसङ्गः । कथं चिदौदयिकनवमीपरत्वे च पूर्वेद्युः पारणा, परेद्युश्च बलिदानमिति

महदेव वैशसम् । रुद्रयामलेऽपि—

अष्टम्या सह कार्या स्यान्नवमी पारणादिने ।
यो मोहाद्दशमीवेधे नवम्यां चण्डिकां यजेत् ॥

पारणं च प्रकुर्याद्वै तस्य पुण्यं निरर्थकम् । इति ।

यदा पुनः पूर्व्वेद्युः षड्दण्डा अष्टमी परस्ताच्च नवमी परेद्युश्च क्षयवशादल्पा नवम्यथ वा नवम्यभावस्तदा पूर्व्वेद्युरष्टम्या अवश्योपोष्यत्वात्परेद्युरल्पायामपि नवम्यां पारणं कार्यम् । पूर्व्वोक्तवचननिचयात् । सर्व्वथा तदभावे यद्यपि दशम्यां पारणनिषेधस्तथापि तत्रैव पारणं कार्यम्, न पूर्व्वेद्युः । अङ्गाङ्गस्य पारणाकालस्याऽनुरोधेन प्रधानानामुपवासानां सङ्ख्याकालबाधस्यान्याय्यत्वात् । तस्मात्प्रधानोपवाससङ्ख्याऽनुरोधेनाऽङ्गभूतपारणाकालव्यवस्थापनं युक्तमिति । यत्पुनः "यो मोहाद्दशमीवेधे" इत्यादिवेधपदं तदपि पूर्व्वोक्तयुक्त्या पारणाकालीनदशमीयोगमात्रपरमेव न तु सायङ्कालीनत्रिमुहूर्त्तवेधपरम् । तस्याऽप्रयोजकत्वात् । तादृशदशमीवेधस्याऽपरिहार्यत्वेन पारणासङ्कटापत्तेश्चेति ।

अथ दशमः ।

रुद्रयामलेऽष्टमेऽध्याये—

आश्विने मासि सम्प्राप्ते शुक्लपक्षे विधेस्तिथिम् ।
प्रारभ्य नवरात्रं स्याद् दुर्गा पूज्या तु तत्र वै ॥
उपोषणेन नक्तेन एकभक्तेन वा पुनः ।
हविष्यान्नेन वा देव ! प्रत्यहं पूजयेच्छिवाम् ॥
व्रतोपवासपूजादौ दिनहानिं च कारयेत् ।
न देवदिवसस्याऽत्र वृद्धिः कार्या विजानता ॥
तिथिवृद्धिं तु यः कुर्यादज्ञानाज्ज्ञानतोऽपि वा ।
परलोके भवेत्पीडा प्रेतत्वजनिता स्थिरा ॥
भगवत्याश्च पीडा स्यादुपवासेन केशव ! ।
तस्मान्न वर्द्धयेद्देव ! दिवसं दुर्गपूजने ॥
प्रत्यहं पूजने प्रोक्तो विधिर्देवमहर्षिभिः ।
तिथिवृद्धौ न कार्यं स्यात्तस्मान्नो वर्द्धयेद्दिनम् ॥
तिथिह्रासस्तु कर्त्तव्यो देवीपूजनके व्रते ।
तेन सम्मानिता देवी ह्रासो येन कृतः प्रभो ! ॥

इत्यादिनोपवासाऽऽधिक्यनिषेधादष्टावेवोपवासाः । न च प्रतिषेधबलादेवाऽधिकोपवाससिद्धिः । तस्य प्राप्तिपूर्वक-

त्वादिति वाच्यम् । नवरात्रसमाख्यामात्रेण भ्रान्त्या नवम्युपवासप्रवृत्तस्याऽनेन निवर्त्तनात् । ननु

अयाची त्वथ वैकाशी नक्ताशी त्वथ वाप्यदः ।
प्रारभ्य नन्दिकां राजन्! यावद्धि नवमी भवेत् ॥

इत्यादिवाक्यैर्नवमीमभिव्याप्यैकभक्तादिविधानात्कथं नवम्यां पारणमिति चेत् न। यावच्छब्दस्याऽवध्यर्थत्वेनाऽभिव्याप्त्यर्थत्वाऽभावात् । अन्यथा पूर्वोक्ताऽनेकदोषापत्तेः । अत एवोक्तं च

नवम्यां च जपं होमं समाप्य विधिवद्बलिम् ।
यात्रां वैजयिकीं कुर्याद्दशम्यां श्रवणेऽपि च ॥ इति ।

नवम्यां जपादिसमाप्तिं वदता जपाद्युत्तराङ्गस्यैव तत्राऽनुष्ठानं दर्शितं, न जपादेरिति । समाप्तिश्चरमपदार्थानुष्ठानत्वात् । ननु

एकभक्तेन नक्तेन स्वशक्त्याऽऽयाचितेन च ।
अथ वा नवनक्तैश्च नवरात्रं समापयेत् ॥

इत्यत्र नवनक्तश्रवणात्कथं नवम्यां पारणमिति चेत् नैष दोषः । नह्युपवासाऽऽधिक्यमपि निषिध्यते येन नवमीपारणविरोधः । पारणशब्दस्य कर्ममात्रसमाप्त्यर्थक-

त्वेऽपि लोकशास्त्राभ्यां योगरूढत्वेनोपवाससमाप्तिवाचक-त्वस्य पूर्वमेव स्थापितत्वात् । तथा चोपवासपक्षे नवम्यां प्रातरेव पारणम् ।

सर्व्वेषामुपवासानां प्रातरेव हि पारणम् ।

इतिवचनात् । नक्तपक्षे तु पारणात्मकस्य भोज-नस्य नक्तकालकर्त्तव्यत्वात्तेन सह नवनक्तनिर्द्देश इति क्वापि न विरोधः । तदेवं सिद्धा नवम्यां पारणा । एवं च युक्तिमुक्ताकरम्बिते वचनचिन्तामणौ परिस्फुरति बुद्धिदरिद्राणां भिक्षालब्धसमाख्यामात्रेण कालातिवाहन-मतितरां दुरदृष्टं गमयति ।

## अथ विसर्जनम् ।

रुद्रयामले—

दशम्यामभिषेकं च कृत्वा मूर्त्तिं विसर्ज्जयेत् । इति ।

तथा तत्रैव—

दशम्यां च विसर्गः स्यादभिषेकश्च माधव ! । इति

राजमार्त्तण्डेऽपि—

सम्प्राप्ते वैष्णवान्ते कृतनिय-

मविधिः प्रेषयेत्तां दशम्याम् । इति ।

तथा—

"निर्माल्यं तु श्रवणदशमीवासरान्ते विजह्यात्"

कात्यायनः—

"श्रवणेन तां च दशमीं सम्प्राप्य सम्प्रेषयेत्"

धवलनिबन्धेऽपि—

उत्तरासु बलिं दद्याच्छ्रवणेन विसर्ज्जयेत ।

श्रवणेनेतिसामान्योपादानेऽपि चतुर्थचरण एव ग्राह्यः। "सम्प्राप्ते वैष्णवान्ते" इतिवाक्यात् । तथा—

अन्त्यपादो दिवाभागे श्रवणस्य यदा भवेत् ।
सम्प्रेषणं तदा देव्या दशम्यां तु पुनर्दिवा ॥

श्रवणान्त्यपादो नवमीयुक्तदशम्यां चेत्तदा तदहरेव । अन्यथा परेद्युरेव प्रातरित्यर्थः । दिनद्वयेऽपि तद्योगाऽभावे दशम्यामेव । तिथेः प्रधानत्वात् । रूपनारायणादयोऽप्येवमेवाहुः—"दशम्यां प्रातः सम्प्रेषयेत्" इति ।

## अथ विजययात्रा ।

यात्रां वैजयिकीं कुर्याद्दशम्यां श्रवणेऽपि वा ।

सा च विजयदशमीत्युच्यते । तथा च नारदः—

वलक्षदशमी या स्यान्मासीषे विजयाऽभिधा ।

त्रिजगस्तत्र शत्रूणां सन्धिर्वा न पराजयः ॥

तस्यां चाऽपराजितापूजा, सीमाल्लङ्घनम् । तदुक्तं

पुराणसमुच्चये—

दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता ।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ॥

विशेषो विश्वरूपे—

अश्मन्तकं शमीं वाऽपि गन्धपुष्पादिनाऽर्चयेत् ।

तत्र मन्त्रः—

अश्मन्तक ! तरुश्रेष्ठ ! वनराज ! वनस्पते ! ।
अतस्त्वां पूजयिष्यामि मम सिद्धिप्रदो भव॥इति ।

तदभावे शमी पूज्या । तदुक्तम्—

सर्वांशलक्षणोपेतामीशानाशां प्रतिष्ठिताम् ।
सम्प्रार्थ्य तां च सम्पूज्य त्वीशानसम्मुखो भवेत् ॥
शमि ! शमय मे पापं नित्यं लोहितकण्टाकि ! ।
धारयित्र्यर्ज्जुनास्त्राणां रामसम्वाददायिनि ! ॥
यथासुखं यथाकामं मया यात्रा करिष्यते ।
तत्र निर्विघ्नकर्त्री त्वं भव रामेण पूजिता ॥ इति ।

तथा—

शमी शमयते पापं शमी आयुष्यवर्द्धिनी ।
अर्ज्जुनस्य धनुर्द्धात्री रामस्य प्रियवादिनी ॥ इति ।

तत्र च राममूर्त्तिं नीत्वा मृद्ग्रहणं कार्यम् ।

तदुक्तम्—

गृहीत्वा साक्षतां मार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत् ॥

तच्च सायंकाले कार्यम । तदुक्तं चिन्तामणौ—

आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ॥

रत्नकोशेऽपि—

ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुन्निद्रतारकः ।
विजयो नाम कालोऽयं सर्वकामार्थसाधकः ॥

कालोत्तरेऽपि—

आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु ।
सायंकाले शुभा यात्रा दिवा वा विजयक्षणे ॥

विजयनामकः क्षणो विजयक्षणः । तल्लक्षणमाह

भृगुः—

एकादशो मुहूर्त्तो यो विजयः परिकीर्त्तितः ।
तस्मिन्सर्वैर्विधातव्या यात्रा विजयकाङ्क्षिभिः ॥इति ।

अत्र चैवं व्यवस्था । नवमीदिने सायंकाले दशमी-सद्भावे तदैव यात्रा ।

नवमीशेषयुक्तायां दशम्यां वाऽपराजिता ।
ददाति विजयं देवी पूजिता जयवर्द्धिनी ॥

इति कालोत्तरे नवमीयुक्तायाः प्राशस्त्यश्रवणात् । इदमपि श्रवणयोगे द्रष्टव्यम् ।

श्रवणर्क्षे तु पूर्णायां काकुस्थः प्रस्थितो यतः ।
उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नरः ॥

इति कश्यपस्मरणात् । यदा तु परदिन एव श्रवणयोगो दशम्यास्तदा तत्रैव यात्रा कार्या ।

उदये दशमी किंचित्सम्पूर्णैकादशी यदि ।
श्रवणर्क्षे यथाकालं सा तिथिर्विजयाभिधा ॥

इतिकात्यायनस्मरणात् । उदये तारकोदये । चिन्तामणिवाक्यात् । सूर्योदयपरत्वे तु दशमीवृद्धावपि परत्र यात्राप्रसङ्गे पूर्वोक्ताऽनेकवाक्यविरोधः । यत्तु गर्ग-

**वचनम्—**

आश्विने दशमीं शुक्लां पूर्वविद्धां न कारयेत् ।
एकादश्या युता कार्या राजपट्टाऽभिषेचने ॥
सूर्योदये यदा राजन् ! दृश्यते दशमी तिथिः ।
आश्विने शुक्लपक्षे तु विजयां तां विदुर्बुधाः॥इति।

तद्राजपट्टाऽभिषेचने इति विशेषणोपादानात्तन्मात्रविषयम् । अतो न विरोधः । द्वितीयदिने सायं दशम्यभावे मध्याह्नादुपरि सद्भावे च दिवैवैकादशे मुहूर्त्ते ।

आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः ।
एकादश्यां न कुर्वीत पूजनं चापराजिताम् ॥
दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः ।
तस्य संवत्सरं राज्ये न क्वाऽपि विजयो भवेत् ॥

इतिस्कान्दे एकादश्यां प्रस्थाने दोषश्रवणात् । एतेन दशमीनिर्णयोऽपि व्याख्यातः । तदुक्तं विश्वरूपे—

नवम्या सहिता कार्या दशम्याश्वयुजे सिता ।
एकादश्या युता जातु न कार्या जयकाङ्क्षिभिः॥इति ।

अन्यदप्यत्राऽश्वपूजानीराजनादि ग्रन्थान्तरादवगन्तव्यं विस्तरभिया नेहोक्तमिति ।

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ॥
दुर्गाव्रतस्य नवरात्रसमाख्ययैव
ख्यातस्य पारणविधिर्विहितोऽतियत्नात् ॥१॥

बुधा ! मुधा दूषणभूषणाभ्यां
दूष्यो न भूष्यश्च मम प्रयासः ॥
यद्यस्ति कोऽप्यत्र गुणाऽऽग्रहश्च
धर्मे तदेनं परिशीलयन्तु ॥ २ ॥

सन्तोऽपि सन्तोषमपास्य दूरं
कृतिं मदीयां यदि दूषयेयुः ॥
हानिस्तदा स्यात्कियती ममाऽत्र
सत्त्वं पुरस्तात्परिहास्यते तैः ॥ ३ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजविनायक-
पण्डितविरचितो नवरात्रप्रदीपः सम्पूर्णः ।



## परिशिष्टम् ।

# अभिनवशात्रप्रदीपं समागतानां ग्रन्थतत्प्रणेतॄणां च अकाराद्यनुक्रमणिका ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| अवय | अवयव | २ | ९ |
| पूज्य | पूज्या | १४ | १८ |
| नेघान्ते | मेघान्ते | १६ | २ |
| सर्व्वर्दे | सर्वदे | १६ | १७ |
| यतो | यतोहि | १७ | ३ |
| विज्ञेयो | विज्ञेया | १९ | १ |
| सयय | समय | २३ | १६ |
| देवाना | देवानां | २८ | ५ |
| वुक्ताया | वुक्तायां | ३४ | ८ |
| चण्डिका | चण्डिकां | ३५ | ८ |
| दास | दासि | ३६ | १४ |
| श्रुणु | शृणु | ३७ | १२ |
| जपहो | जपहोम | ३८ | १५ |
| विवर्जितान्: | विवर्जितान् | ४९ | ४ |
| पुष्पाज्जलिं | पुष्पाञ्जलिं | ५५ | १३ |
| मुक्वा | मुक्त्वा | ५६ | १० |
| गीतवांदित्र | गीतवादित्र | ५६ | १४ |
| सहस्र | सहस्र | ५६ | १६ |
| पञ्चम्या | पञ्चम्यां | ५८ | १ |
| विद्धा | विद्ध | ७३ | १३ |
| तस्या | तस्यां | ७९ | ३ |
| लब्धा | लब्ध्वा | ८३ | २ |
| व्राह्मणो | ब्राह्मणो | ९६ | १० |
| ,, | ,, | ,, | १७ |
| दानर्चा | दानार्चा | ९० | २ |

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A
Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya.
Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya.
Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No. 6—(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt.
Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M..A
Rs. 1-4

No 7—( Part II ) Ditto Ditts Rs. 1-8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 0-10-6

No. 9—(Part 1)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1–2

No. 10–(Part II)–The Siddhāntaratna by Baladeva Vidyābhūṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A. Rs. 2–12

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part 1)–The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–14

No. 15–( Part–II )–The Tripurārahasya ( Jñānakhaṇḍa ) Ed. by Gopinath Kaviraj, M. A. Rs. 2–12

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. *Rs*, 0–12

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. *Rs* 2–4

No. 19–( Part.II ) Ditto Ditto *Rs*. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. *Rs*. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchanana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. *Rs*. 1–2

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares.

*N*o. 24–S'rī Rāmatāpinīyopaniṣad with the Commentary called *R*āma-*K*āśikā in Pūrvatāpinī and *Ā*nandanidhi in Uttaratāpinī by *Ā*nandavana.
Ed. with Introduction etc. by *A*nantarāma *S'*āstrī Vetāla *S*āhityopādhyāya, Post–*Ā*chārya *S*cholar, Govt. *S*anskrit College, Benares, with a Foreword by Pandit Gopī *N*ātha Kavirāja, M. *A*., Principal, *G*overnment *S*anskrit *C*ollege, Benares.

*N*o. 25–*S*āpiṇḍyakalpalatikā by *S*adāśiva deva alias *Ā*padeva with a commentary by *N*ārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha *S'*āstrī Hośiṅga, *S*āhityopādhyāya, *S*ādholāl *R*esearch *S*cholar, Govt. *S*anskrit College, Benares.

---

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

*Gopinath Kaviraj*, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by *Gaṅgānātha* Jhā.

(b) The view-point of *Nyāya* Vaiśeṣika *Philosophy*, by *Gopi* nath *Kaviraj*.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. *Rs*. 1–15

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī *Rasāla* Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. *A*. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, byGaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath *Kaviraj*.

(f) Theism in *Ancient* India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) *A Seventeenth* Century Astrolabe, by a*P*dmākara Dvivedi

(i) *Some* aspects of Vīra 'aiva Philosophy,by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā *S'*āstri Khiste.

(l) *Sondala* Upādhyāya, by Gopinath Kaviraj. *Rs*. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.*A*.Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by *N*īlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. *P*ātankar. *Rs*. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs. 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vānaras as depicted in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of Ṛgveda, Vājasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nāth Roy.

(h) Notes and Queries (1) Virgin Worship, by Gopinath Kaviraj.

Vol. VI—(In progress)

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) Studies in Hindu Law (5): Evidence, by Ganganatha Jhā.

To be had of
The Superintendent, Government Press.
Allahabad, U. P. (India)

